अखिलभारतीय—प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला—३३

ज्योतिषशास्त्रीयः

# सिद्धान्तशब्दकोशः

डॉ. नारायणन नम्पूत्तिरी एन. टी.

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन—प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु—कालिदास—संस्कृत—विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली
2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–33

ज्योतिषशास्त्रीयः

# सिद्धान्तशब्दकोशः

डॉ. नारायणन नम्पूत्तिरी एन.टी.

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

| | | |
|---|---|---|
| शीर्षकम् | – | ज्योतिषशास्त्रीयः सिद्धान्तशब्दकोशः |
| लेखकः | – | डॉ. नारायणन नम्पूत्तिरी एन.टी. |
| प्रधानसंपादकः | – | आचार्यः श्रीनिवासः वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादकः | – | आचार्यः मधुसूदनः पेन्ना<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| संपादकमण्डलम् | – | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीना गाणु, नागपुर. |
| प्रकाशनवर्षम् | – | २०२० |
| आवृत्तिः | – | प्रथमा |
| मूल्यम् | – | 240.00 |
| आय.एस.बी.एन. | – | 9788183154048 |
| मुखपृष्ठम् | – | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| प्रकाशकः | – | कुलसचिवः,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.<br>एवं<br>न्यू भारतीय बुक कॉरपोरेशन<br>२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,<br>४७३५/२२, अंसारी रोड, दरिया गंज,<br>नई दिल्ली – ११०००२<br>फोन नं. : २३२८०२१४, २३२८०२०९ |




एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek<br>10th January 2020

Prof. Srinivasa Varakhedi<br>Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Dinakar Marathe
Dr. Kalapini Agasti
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# विषयानुक्रमणिका





# उपोद्घातः

जगति समे अपि जनाः सुखमेव वाञ्छन्ति। तदुपायत्वेन अनिष्टस्य निवृत्तिं काङ्क्षन् ते इति तु सर्वविदितमेव। इयञ्च इष्टावाप्तिः अनिष्टनिवृत्तिश्च केन भवेदिति प्रश्ने वेद एव शरणं भवति। **विदन्ति अनेन इति वेदः** इति वेदशब्दस्य व्युत्पत्तिः। अर्थात् प्रत्यक्षेण अनुमानेन वा यत् न ज्ञातुं शक्यते तादृशं विषयं बोधयन्ति इमे वेदाः। उक्तञ्च –

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते।**
**एनं विदन्ति वेदेन तस्मात् वेदस्य वेदता।।** इति।

अयञ्च वेदः संहिता, ब्राह्मणम्, उपनिषद् इति त्रिविषयात्मको भवति। तत्र च मन्त्र–भागः संहिता इति, वेदान्तभागः उपनिषद् इति प्रसिद्धः। ब्राह्मणभागश्च यज्ञविषयात्मकः। स च यज्ञः कालानुरोधी। कालश्च विना ज्यौतिषशास्त्रं ज्ञातुमशक्तः। उक्तञ्च सिद्धान्तशिरोमणौ–

**वेदस्तावत् यज्ञकर्मप्रवृत्ताः यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यतस्स्यात् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्।।**

अतश्च वेदेषु प्राधान्येन वर्तमानानां यज्ञादिक्रियाणां फलदाने आधारत्वेन वर्तते इदं ज्यौतिषम्। यद्यपि वर्तन्ते षडङ्गानि वेदस्य –

**ज्योतिः कल्पो निरुक्तञ्च शिक्षा व्याकरणं तथा।**
**छन्दो विचितिरेतानि षडङ्गानि विदुः श्रुतेः।।** इति।

तथापि एतेषु षट्सु प्राधान्यमावहति ज्यौतिषम्। पतञ्जलिनाप्युक्तं पस्पशाह्निके – **ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च** इति। वेदाङ्गेषु षट्सु ज्योतिषस्य प्राधान्यमन्यादृशं भवति। उक्तञ्च – **ज्योतिषामयनं चक्षुः, वेदस्य निर्मलं चक्षुः, ज्योतिश्शास्त्रमकल्मषम्** इत्यादि। ज्योतिषं कालविज्ञापकं शास्त्रम्। सुमुहूर्तानुरोधेन क्रियमाणा यज्ञादिक्रियाविशेषाः फलाय कल्पन्ते, नान्यथा, तन्मुहूर्तज्ञानञ्च ज्योतिषायत्तमतोऽस्य शास्त्रस्य वेदाङ्गत्वं स्वीकृतम्।

यथा –

**वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्॥** इति।

एवमङ्गषट्के मूर्धन्यमावहतः अस्य शास्त्रस्य प्रयोजनं तावत् कालसूचकत्वमेव।

**ज्यौतिषम्**

ज्योतींषि अधिकृत्य कृतं शास्त्रं ज्योतिषमिति। ज्योतींषि अर्थात् ग्रहनक्षत्राणि। सूर्यादयः नवग्रहाः, अश्विन्यादि सप्तविंशतिनक्षत्राणि। अतः गतिशीलाः ग्रहाः। अचलानि नक्षत्राणि इति ज्ञेयम्। एवमत्र ग्रहाणां नक्षत्राणां गतिः निरीक्ष्यते परीक्ष्यते विविच्यते च।

वैदिककालादारभ्यैव शास्त्रस्यास्य महत्त्वम्, आदरः प्रयोजनञ्च वरीवर्ति। वेदोक्त यज्ञादिकर्मणां कालनिर्णायकत्वेन ज्योतिषमभिहितम्। तस्मादेव शास्त्रस्यास्य **कालविधायक शास्त्रम्** इत्यपरं नाम सङ्कीर्त्यते। तस्मादेव वेदस्य षडङ्गेषु ज्योतिषमन्यतमत्वेन विलसति।

षडङ्गेषु तावज्ज्योतिश्शास्त्रं दिग्देशकालव्यञ्जकत्वेन यज्ञ-तपो-दान-व्रतोपवासादीनामादिबीजमिति सकलशास्त्रापेक्षया ज्योतिश्शास्त्रस्याऽध्ययनाध्यापन-मतीवावश्यकम्। यतो हि सर्वेषामेव वेदवेदाङ्गोपनिषद्दर्शनपुराणेतिहासादीनामयमेवैकः सिद्धान्तो यत् – **सर्वैरेव नरजातैर्यज्ञतपोदानव्रतादि नियमैरीश्वरः उपासनीय** इति। परञ्च काले कृतमेव यत्किञ्चिदपिकर्मसाफल्यमकाले कृतमपि कर्मवैफल्यं परिणमतीति तावत् कालात्मकस्यास्य शास्त्रस्य प्रतिपदं प्रयोजनं भवत्येव। एष किल सामान्यो नियमः यद्यः कोऽपि स्वविषयस्यैव बाहुल्येन पोषणं कुरुते। परञ्च निष्पक्ष-पातधियापीदमेव सिद्धं यन्नैतद्विना लोकानां लौकिकं वैदिकं च किमपि कर्म साफल्यमुपयातीति नारदसंहिता स्पष्टयति –

**वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमकल्मषम्।**
**विनैतदखिलं कर्म श्रौतं स्मार्तं न सिद्‌ध्यति॥**

अथ **न जातु ज्योतिर्ज्योतिरन्तराद्द्रष्टुं ज्ञातुं च शक्यते** इति तेजोमयो भगवानव्ययो मुक्तिमार्गो रविरीश्वरः **सूर्य आत्मा जगतस्तस्थुषश्चे**ति श्रुतेः, **मूर्तित्वे**

**परिकल्पितः शशभृतो वर्त्मा पुनर्जन्मनाम्** इति बृहज्जातके वराहवचनाच्च। तदंशकाः ज्योतिष्मन्तो ग्रहा वै देवाश्च, ग्रहास्ते देवतांशकाः इति भट्टोक्तेः। चक्षुरूपज्योतिश्शास्त्रं विना न केनापि शास्त्रेण ज्ञातुं शक्यन्त इति कथने न भवति काचिदपि वाच्यतेति। तथा च **दैवाधीनं जगत्सर्वम्** इति वचनात् सकलं जगत् ग्रहाधीनमेव। वस्तुतो रविकिरणसंयोगवशादेव सकलं जगज्जातं जीवनं स्थैर्यं च वहतीति प्रत्यहं त्रिकालं ..... **पश्येम शरदश्शतम्, जीवेम शरदः शतम्, श्रुणुयाम शरदश्शतम्, प्रब्रवाम शरदश्शतम्, अजीताः स्याम शरदश्शतम्, भूयश्च शरदः शतादित्यादिभिः ऋग्भिः रविरुपास्यते लोकैः।** तेषां गगन-गगनेचर-भू-भूधर-त्रिदश-दावन मानवानां स्थितिमितिगतिज्ञानं ज्योतिश्शास्त्रमन्तरा न केवलं दुर्घटमुता सम्भवमपीति।

**वेदस्य चक्षुः किल शास्त्रमेतत् प्रधानताङ्गेषु ततोऽस्ययुक्ता।**
**अङ्गैर्युतोऽन्यैरपि पूर्णमूर्तिश्चक्षुर्विना कः पुरुषत्वमेति।।**

यथा नहि नेत्रं कश्चिदपि जनो निरापदं स्वीयमभिलषितं पदं गन्तुं पारयेत्तथा ज्यौतिश्शास्त्रं विना जगतः श्रेयोमार्गः कथमपि न सम्भवतीति। ईदृगिदं शास्त्रं नान्यशास्त्रवत्सन्देहास्पदमप्रत्यक्षञ्च उत समन्ताद्युक्तिमतप्रत्यक्षञ्च। नान्यत किमपि शास्त्रं ज्योतिः शास्त्रवत् इदमेव तत्, अत्रैव तत्, एतावदेव तत् इत्थमेव तदित्यादि, प्रकटयितुं पारयेदित्युक्तमपि। तथा -

**अप्रत्यक्षाणि शास्त्राणि विवादास्तेषु केवलम्।**
**प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ।।** इति।

अभेदं शास्त्रं हि -

**सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।**
**कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिरसः।।**
**लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।**
**शौनकोष्टादशश्चैते ज्योतिः शास्त्रप्रवर्तकाः।।**

इति कश्यपसंहितावचनात् अष्टादशपुराणानुकल्पमष्टादशर्षिप्रवरप्रवर्तित मत आर्षम्। तेन तथा सूर्यसिद्धान्ते -

**दिव्यं चक्षुर्ग्रहाणां दर्शितं ज्ञानमुत्तमम्।**
**विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम्।।**

**ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम् ।**
**ज्योतिर्ज्ञानं तु यो वेद स याति परमां गतिम् ।।**

इति गर्गवचनात् । अपि च –

**न सांवत्सरपाठी च नरकेषूपपद्यते । ब्रह्मलोकप्रतिष्ठां च लभते दैवचिन्तकः ।।**

वेदेषु एव तत्र तत्र ज्योतिश्शास्त्रसम्बद्धविषयाः दृश्यन्ते । तद्यथा – **अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् । सोमो राजा मृगशीर्षेण आगन्न् । इन्द्रो ज्येष्ठा मनु– नक्षत्रमेति ।**...... इत्यादीनि । तस्मादेव ज्योतिषं वेदस्याङ्गत्वेन परिलक्ष्यते । न केवलमिदमपि तु –

**जातकगोलनिमित्तप्रश्नमुहूर्ताख्यगणितनामानि ।**
**अभिदधतीह षडङ्गान्याचार्या ज्यौतिषे महाशास्त्रे ।।** इति ।

एवं नानाविधप्रयोजनवच्छास्त्रस्यास्य विभागत्रयं वर्तते – गणितं, संहिता, होरेति । उक्तं यथा प्रश्नमार्गकारः –

**स्कन्धत्रयात्मकं ज्योतिश्शास्त्रमेतत् षडङ्गवत् ।**
**गणितं संहिता होरा चेति स्कन्धत्रयं मतम् ।।**

**संहिता**

संहितायां भूशोधनं, दिग्शोधनं, शल्योद्धारः, मेलापकम्, आयाद्यानयनं, गृहोपकरणं, गृहारम्भः, गृहप्रवेशः, जलाशयनिर्माणं, मङ्गलमुहूर्तः, उल्कापातः, वृष्टिः, ग्रहोदयास्तफलं, ग्रहचारफलम् इत्यादयः उपवर्ण्यन्ते । उक्तं यथा –

**जनपुष्टिक्षयवृष्टिद्विरदतुरगादि सकलवस्तूनाम् ।**
**केतूल्कादीनां च लक्षणमुदितं संहितास्कन्धे ।।**

गर्गः, पराशरः, असितः, देवलः, काश्यपः, भृगुः, वसिष्ठः, बृहस्पतिः, भद्रबाहुः, वराहमिहिरादयः प्रसिद्धाः संहिताग्रन्थप्रणेतारः ।

**होरा**

होरायाः जातकशास्त्रमिति अपरनाम । **होरा** इति पदम् अहोरात्रशब्दा–न्निष्पन्नमिति वराहमिहिरः अभिप्रैति स्वीये ग्रन्थे बृहज्जातके । यथा –

**होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात् ।**
**कर्मार्जितं पूर्वभवे सदादि यत्तस्य पंक्तिं समभिव्यनक्ति ।।** इति ।

पूर्वः अकारः, परः त्रकारः, अहोरात्रेतिशब्दस्य एतयोः पूर्वापरवर्णयोः द्वयोः लोपात् **होरा** इति पदं सिद्ध्यति । होरेतिपदस्य बहवो अर्थाः प्रतिपादिताः । तत्र होरेत्यस्य जातकशास्त्रमिति अर्थः । ततः एकघण्टात्मकः काल इत्यप्यर्थः । **होरेति लग्नं भवनस्य चार्धम्** इत्यनेन राश्यर्धभागस्यापि होरेति नाम । तत्र युग्मराशौ आद्यर्धभागः चन्द्रहोरा, ततोऽर्धः सूर्यहोरा इति क्रमः । ओजराशौ आद्यर्धभागः सूर्यहोरा, ततोऽर्धः चन्द्रहोरा च । होराशास्त्रे महान्तः निष्णाताः, बहुशास्त्र-पण्डिताः कार्यनिरताः आसन्निति शास्त्रस्यास्य विकासः, तथा च वराहमिहिरेण **होरातन्त्रमहार्णवप्रतरणे** इति पदप्रयोगेनास्य वैशाल्यञ्च अवगम्यते । बृहज्जातकं, सारावलिः, जातकपद्धतिः, जातकपारिजातम्, बृहत्पराशरहोराशास्त्रम् इत्यादयः केचन प्रसिद्धाः ग्रन्थाः । तत्र बृहज्जातकस्य स्थानं महत्तममस्ति जातकग्रन्थेषु ।

**गणितम्**

गण्यते अथवा सङ्ख्यायते तद्गुणिनं तत्प्रतिपादकत्वेन तत्संज्ञं शास्त्रमुच्यते । तत्र स्पष्टेनोच्चावचजनप्रसिद्धमार्गेण सङ्कलनादिना यदुच्यते तद्व्यक्तव्यम् । यावत्तावदादिवर्ण-कल्पनासापेक्ष्यबुद्ध्या गणितमव्यक्तम् । ग्रहकर्मणा ग्रहगणितं, गोलेन वेधादिना ग्रहकर्म सवासनं गणयत इति गोलापेक्षितत्वात् गोलगणितम् । गणितचतुष्ट्यात्मको गणितस्कन्धः । व्यक्ताव्यक्तभगोलवासनमयः इति । काल-विधानशास्त्रपरपर्यायं ग्रहगणितमेव गणितस्कन्धः ।

तत्र गणितस्कन्धे आर्यभटस्य आर्यभटीयं, लल्लटस्य धीवृद्धिदम्, ब्रह्मगुप्तस्य ब्रह्मस्फुटसिद्धान्तः, भास्कराचार्याणां सिद्धान्तशिरोमणिः इत्यादयः प्रसिद्धाः । सिद्धान्तज्योतिषे विद्यमानाः केचन प्रमुखाः ग्रन्थाः यथा - आर्षः सूर्यसिद्धान्तः। आर्यभट्टस्य आर्यभट्टीयम्। ब्रह्मगुप्तस्य ब्रह्मसफुटसिद्धान्तः। वराहमिहिरस्य पञ्चसिद्धान्तिका। भास्कराचार्यस्य सिद्धान्तशिरोमणिः। कमलाकरस्य सिद्धान्त-तत्वविवेकः। भास्कराचार्यस्य लीलावती।

एतेषां ग्रन्थानां पठनपाठनाय शास्त्रेऽस्मिन् विद्यमानानां पदानां स्पष्टज्ञान-मपेक्ष्यते। तत्प्राप्तये च अत्र शब्दकोशः निर्मीयते।

# प्रथमोऽध्यायः

## 'अ' वर्गः

**अंश** पु० विभाजने, अंशयतीति, संख्यासूत्रकाङ्कविभाज्ये तथाङ्के, च अन्योन्य–हाराभिहतौ हरांशाविति, अंशाहनिच्छेदभेदेन भक्तेति, भजेच्छिदोऽशैरथतैर्विमिश्रैः। ''अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्। मिथो हराभ्यामपवर्तिताभ्यां यद्वा हरांशौ सुधियात्र गुण्यौ।''(लीला०) ''चतुर्दश्यष्टमांशे च क्षीणो भवति चन्द्रमाः अमावास्याष्टमांशे च ततः किल भवेदणुः।''(सू० सि०) विशेषावयवे, राशिचक्रस्य षष्टुत्तरशतत्रयधा विभाजके भागे, राशेस्त्रिंशद्वा विभाजके अवयवे। ''अक्षस्यांशः समाख्याताः षष्ट्युत्तरशतत्रयमिति। क्षेत्रं होरा द्रेक्काण नवांशो द्वादशांशकः। त्रिंशाशश्चेति विज्ञेयः षड्वर्ग इति च।।'' स च अंशः षष्टिकलात्मकः कला तु षष्टिविकलात्मिका।

**अंशक** त्रि० विभाजके । स्त्रियां अंशिका ।

**अंशसवर्णन** न० समानोवर्णः योगवियोगयोग्यता सवर्णः। अतुल्यच्छेदयोः राश्योः समच्छेदकरणम् । अतुल्यच्छेदराश्योः योगवियोगयोग्यतासम्पादके समच्छेदसाधने क्रियाविशेषे, तत्रादावंशसवर्णनमित्युक्तमत्र – ''अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवमिति।''(लीला०)

**अंशु** पु० किरणे। सूत्रे। सूक्ष्मांशे। प्रकाशे। प्रभायाम्। योगे च।

**अंशुधर** पु० सूर्य्ये । अंशुभृदादयोऽप्यत्र, किरणादिधारके ।

**अंशुपति** पु० सूर्य्ये, तस्य सर्वतेजस्विनां किरणाधायकत्वात् चन्द्रादि ग्रहादौ तेजोदायकत्वाच्च अस्य तथात्वम्।

**अंशुमालिन्** पु० अंशुभिर्मलते , अंशवः मालेव । सूर्य्ये, द्वादश सङ्ख्यायाम्।

**अकाय** पु० नास्ति कायोऽस्य । कायशून्ये राहौ तस्य चामृताहरणकाले विष्णुना च्छिन्नमस्तकत्वेऽपि अमृतप्राशनेन अमरतां गतः।

**अकाल** पु० अप्राशस्त्ये । अप्राप्तकाले ।

**अक्ष** न० अश्नुते व्याप्नोति विषयान् स्ववृत्त्या संयोगेन वा । ''शङ्कुर्नरो ना कथितः स एव खार्द्धाद्रवेर्या विषुवद्दिनार्द्धे । नतिः पलोऽक्षश्च सएव तज्ज्ञैस्तत्रोन्नतिर्यास्य सएव लम्ब।'' इति सिद्धान्तशिरोमणिगणिताध्यायोक्ते विषुवद्दिनार्द्धे खार्द्धापेक्षया नतिरूपे पलांशभेदे । एतद्विवरणं भास्कराचार्येण प्रमिताक्षरायां स्वयमेव कृतम् । यथा निरक्षरदेशे यदेव विषुवन्मण्डलं तदेव सममण्डलं ततः क्षितिजादन्यदुन्मण्डलं नाम वलयं नास्ति तत्र ध्रुवौ च क्षितिजसंज्ञे, अथ निरक्षदेशात् द्रष्टा यथा यथा उत्तरतो गच्छति तथा तथा उदक्ध्रुवमुन्नतं पश्यति तथा यैर्भागैर्ध्रुव उन्नतस्तैरेव भागैः अक्षसंज्ञैः खस्वस्तिकात् दक्षिणतो विषुवन्मण्डलं नतं पश्यतीति। ''चन्द्राश्वि १२ निध्ना पलभार्द्धिता च लङ्कावधिः स्यादिह दक्षिणोऽक्ष'' इति भास्वती। ''उदग्दिशं याति यथा यथा नरस्तथा तथा खान्नतमृक्षमण्डलम् । उदग्ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशका।''(सि शि०) इति।

**अक्षक्षेत्र** न० अक्षनिमित्तं क्षेत्रम् । अक्षसाधनार्थं क्षेत्रतया कल्पितेषु अक्षभवेषु अष्टसु क्षेत्रेषु। तानि च सिद्धान्तशिरोमणौ गणिताध्याये दर्शितानि यथा – '' भुजोऽक्षभा कोटिरिनाङ्गुलो नाकर्णोऽक्षकर्णः खलुमूलमेतत्। क्षेत्राणि यान्यक्षभवानि तेषां विद्येव मानार्थयशः सुखानाम् ।। ''लम्बज्यका कोटिरथाक्षजीवा भुजोऽत्र कर्णस्त्रिभुजे त्रिभज्या । कुज्या भुजः कोटिरपक्रमज्या कर्णोऽग्रका च त्रिभुजं तथेदम् ।। तथैव कोटिः समवृत्तशङ्कुरग्रा भुजस्तद्धृतिरत्र कर्णः।। भुजोऽपमज्या समना च कर्णः कुज्योनिता तद्धृतिरत्र कोटिः। अग्रादिखण्डं कथिता च कोटिरुद्वृत्तना दोः श्रवणोऽपमज्या।। उद्वृत्तना कोटिरथाग्रकाग्रखण्डं भुजस्तच्छ्रवणः क्षितिज्या। खण्डं यदूर्ध्वं समवृत्तशङ्कोर्यत्तद्धृतेस्तावथ कोटिकर्णौ । अग्रादिखण्डं भुज ८ एवमष्टौ क्षेत्राण्यमून्यक्षभवानि तावत् ।।''(सि शि०) क्षेत्राणि दर्शयेत्, तत्र दक्षिणोत्तरमण्डले विषुवद्वृत्तसम्पातादधो यावाँल्लम्बः क्षितिजसमसूत्रपर्यन्तः सा तत्र कोटिः, लम्बनिपातकुमध्ययोरन्तरं साऽक्षज्या तत्र भुजः, भूमध्याल्लम्बनिपातकुमध्ययोरन्तरं सा तत्र कर्णः, इदमप्यक्षक्षेत्रम् । इष्टाहोरात्रावृत्रं यत्र क्षितिजे लग्नं तस्य प्राक् स्वस्तिकस्य चान्तरमग्रा (चापांशः) तेषां ज्याग्रा तावती च प्रत्यक्क्षितिजे अग्राग्रयोर्निबद्धं सूत्रमुदयास्तसूत्रम् अहोरात्रवृत्तोन्मण्डलसम्पातस्य प्राच्यपरसूत्रस्य

च यदन्तरं सा क्रान्तिज्या, सा तत्र कोटिः, अग्रा कर्णः, तदग्रयोरन्तरं सा कुज्या, स भुजः इदमक्षक्षेत्रम्, तथाहोरात्रवृत्तसममण्डलसम्पातादधोवलम्बः, समवृत्तशङ्कुः सा कोटिः, अग्रा भुजः, अहोरात्रवृत्ते ज्याखण्डकं तद्धृतिः कर्णः, इदमक्षक्षेत्रम्, तथा कुज्योनिता तद्धृतिरहोरात्रवृत्ते ज्यार्द्धं सा कोटिः, उन्मण्डले क्रान्तिज्या स भुजः, समवृत्तशङ्कुः कर्णः, इदमक्षक्षेत्रम्, तथाहोरात्रोन्मण्डलयोः सम्पातादवलम्ब उन्मण्डलशङ्कुः सः भुजः, उन्मण्डलवृत्ते क्रान्तिज्या कर्णः, उन्मण्डलशङ्कुमूलस्य प्राच्यपरसूत्रस्य च यदन्तरं तदग्रादिखण्डं सा तत्र कोटिः, इदमक्षक्षेत्रम्, तथो-न्मण्डलशङ्कुः कोटिः, शङ्कुमूलोदयास्तसूत्रदोरन्तरमग्राग्रखण्डं स भुजः, कोटिभुजाग्रयो-रन्तरसूत्रं सा कुज्या स तत्र कर्णः, इदमक्षक्षेत्रम्, तथोन्मण्डलशङ्कुना हीनः समशङ्कुस्तत्समशङ्कोरूर्द्धं खण्डं सा कोटिः, कुज्योना तद्धृतिस्तद्धृरूद्ध्र्वखण्डं स कर्णः, अग्रादिखण्डं स भुजः, इदमक्षक्षेत्रम् । एतान्यष्टौ तावत्कथितानि । एवमन्यान्यपि भवन्ति ।

**अक्षज** न० अक्षभवे क्षेत्रादौ ।

**अक्षय** त्रि० नास्ति क्षयोऽस्य। क्षयरहिते सर्वदा वर्तमाने। अक्षयपुण्यसाधने तिथि भेदे च।

**अक्षयतृतीया** स्त्री० वैशाखशुक्लपक्षतृतीयायाम् । ''वैशाखमासे राजेन्द्र शुक्लपक्षे तृतीयिका। अक्षया सा तिथि प्रोक्ता कृत्तिकारोहिणीयुता । तस्यां दानादिकं सर्वमक्षयं समुदाहृतम् ।''

**अक्षवृत्त** न० अक्षं राशिचक्ररूपं वृत्तं वेष्टनाकारं कोणशून्यं क्षेत्रम् । राशिचक्ररूपे वृत्तक्षेत्रे।

**अग** पु० न गच्छतीति । न गच्छति वक्रगत्या पश्चिमम् । सूर्ये तस्य हि वक्रगत्यभावः । ''वक्रशीघ्रगतिश्चैव भवेत् भौमादिपञ्चके'' । आर्यभट्टमते तु पृथिव्या एव गतिमत्वेन दिनरात्रिसम्भवात् सूर्यस्य न गतिमत्वम् ।

**अगु** पु० न गौः किरणोऽस्य । राहुग्रहे सूर्य्यालोकाभावे तमसि ।

**अग्निकोण** पु० अग्नेः अग्निदेवताकः कोणः। अग्निदैवत्ये पूर्वदक्षिणयोर्दिक् ।

**अग्निभ** न० अग्निरिव भाति । नक्षत्रे । अग्निदैवत्ये कृत्तिका नक्षत्रे ।

**अग्निलोक** पु० अग्न्यधिष्ठिते मेरुशृङ्गाधःस्थे भुवनभेदे । ''सद्रत्नकाञ्चनमयं शिखरत्रयं च मेरोर्मुरारिकपुरारिपुराणि तेषु । तेषामधः शतमखज्वलनान्तकानां रक्षोऽम्बुपानिल–शशीशपुराणि चाष्टौ।''(सि शि०)

**अणु** त्रि० क्षुद्रे, सूक्ष्मपरिमाणाविति। ''अनणुषु दशमांशोऽणुष्वथैकाद–शांशः।''(लीला०)

**अणुरेवती** स्त्री० अणुः सूक्ष्मा रेवती तारेव ।

**अण्डकटाह** न० अण्डं ब्रह्माण्डं कटाहमिव प्राणिजातकृतकर्मपाकसाधनत्वात् । शुभाशुभकर्मपाकसाधने ब्रह्माण्डगोलके । '' तद्ब्रह्माण्डकटाहसम्पुटतटे।''(सि शि०)

**अतिवेगित** त्रि० अतिवेगो जातोऽस्य तारा । जाताधिकवेगे, ''भौमादयोऽल्पमूर्त्तित्वा–च्छीघ्रमन्दोच्च संज्ञकैः देवतैरपकृष्यन्ते सुदूरमतिवेगिताः ।

**अतुहिनरशमिः** पु० न तुहिनः अहिम उष्णो रश्मिरस्य । उष्णरश्मौ सूर्ये ।

**अधि** अव्य० उपरि, अधिको, अतिशये च ।

**अधिकमास** पु० मलमासे।

**अधिकरणविचाल** पु० अधिकरणस्य अन्यधाकरणम् , एकस्य राशेः पञ्चधा विभागे, पञ्चात्मकस्य वा एकधा विभागे च अधिकरणस्य संख्याया विचालः।

**अधिमास** पु० अधिको रविमासादतिरिक्तः शुक्लप्रतिपदादिदर्शान्तश्चान्द्रो मासः। मलमासे असंक्रान्तिमासोऽधिमासो इति । रविसंक्रान्तिवर्जितो मासोऽधिमासः।

**अनणु** पु० न अणुः। स्थूलधान्ये ''अनणुषु दशमांशोऽणुष्वथैकादशांशः।''(सि शि०)

**अनन्तचतुर्दशी** स्त्री० भाद्रपदशुक्लचतुर्दश्याम् ।

**अनर्काभ्युदित** पु० न ईषत् अर्कोऽभ्युदितो यस्मिन् । ईषदर्कोदयकाले । अनर्का–भ्युदितो काले माघे कृष्णचतुर्दशी ।

**अनुपात** पु० अनुरूपः त्रैराशिकेन पातः । पाटीगणितोक्तेन त्रैराशिकेन युक्तसंख्यापाते।

''पुरान्तरं चेदिदमुत्तरं स्यात् तदक्षविश्लेषलवैस्तदा किम् । चक्रांशकैरित्यनुपातयुक्ता युक्तं निरुक्तं परिधेः प्रमाणम्।''(सि शि०) निरक्षदेशः खदेशाद्यथा यथा दक्षिणतो भवति तथा तथा खस्वस्तिकाद्विषुवद्वृत्तं नतं तयोरन्तरेऽक्षांशः। ते च निरक्षदेश-जापसारयोजनैरनुपातेनोत्पद्यन्ते। अतः कस्मिंश्चित् पुरेऽक्षांशान् ज्ञात्वा तस्मात् पुरादुत्तरतोऽन्यस्मिन् पुरे ज्ञेयाः। ततस्तेषामन्तरांशैः पुरान्तरयोजनैश्चानुपातः। यद्यन्तरांशैः पुरान्तरयोजनानि लभ्यन्ते तदा चक्रांशैः ३६० किमिति फलं भूपरिधियोजनानि । तदानयनञ्च - प्रमाणमिच्छा च समानजाती आद्यन्तयोः स्तः, फलमन्यजाति मध्ये, तदिच्छाहतमाद्यहृत् स्यादित्युक्त त्रैराशिकरीत्या अन्तरयोजनसङ्ख्याङ्केन विभक्ते लब्धं परिधिमानसङ्ख्या ।

**अनुप्रवेश** पु० अनु रूपप्रवेशे। अमावास्यायाश्चन्द्रार्कयोः एकराश्यवस्थितत्वेन सूर्यमण्डलादधः स्थितत्वाच्चार्काच्चन्द्रस्यान्तरगतौ सूर्यरश्मेरिन्दौ प्रवेशः, तदुत्तरञ्च क्रमशः प्रवेशाधिक्यम्। यथा च तस्याधःत्वं तथा इन्दुशब्दे वक्ष्यते। तथाहि यावद् यावञ्च्च सूर्यात् चन्द्रमाः पूर्वं गच्छति तावत्तावदेव व्यवधानानुरूपेण सूर्यरश्मेस्तत्र क्रमशः प्रवेशः।

**अन्धकरिपु** पु० अन्धकस्य अन्धकारस्य रिपुः अपसारकत्वात्, सूर्य्ये, चन्द्रे च।

**अप** अव्य० वियोगे, विपरीते, निदर्शने, वर्ज्जने । ''समेन केनाप्यपव-र्त्येति।''(लीला०)

**अपकृष्ट** त्रि० अधमे, हीने, सकालात् पूर्वकाले कृते, आकृष्टमात्रे च । '' स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहा।''(सू सि०)

**अपक्रम** पु० अपयाने । अपक्रम्यते यस्मात् । अपयानावधिस्थाने '' विक्षिपत्येष विक्षेपं चन्द्रादीनामपक्रमादिति।''(सू सि०) ''अपक्रमात् क्रान्तिवृत्तस्थस्पष्टग्रहभोग-स्थानादिति।''

**अपम** त्रि० अपकृष्टं मीयते इति । अपकृष्यभूगोलादुपरि मीयते । भूगोलानाच्छा-दितान्तरिक्षभागे। ज्योतिषपरिभाषितायां सूर्य्यादिगत्यर्थतिर्य्यग्रेखायां क्रान्तौ यथा- ''नाडिकामण्डलात् तिर्य्यगत्रापमः, क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः । क्षेपवृत्ता-

वधिस्तिर्य्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालोऽपम।''(सि शि०) क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य नाडीवृत्तात् तिर्य्यगन्तरम् अपमः क्रान्तिः। अथ विषमण्डले यत् ग्रहस्थानं तस्य क्रान्तिवृत्तात् यत् तिर्यगन्तरं स विक्षेपः । अथ विषमण्डलस्य प्राक् च नाडीवृत्तात् यत् तिर्यगन्तरं सः अपमः स्फुटा क्रान्तिः। ग्रहस्य उत्तरतो वाम्यदिशं याम्यान्तात् तदनु सौम्यदिक्भागम् । ''परिसरतां गगनसदां चलनं किञ्चिद्भवेदपमः।''(सि शि०)

**अपमज्या** स्त्री० अपमस्य धनुराकृतिक्षेत्रस्य ज्येव । क्रान्तिवृत्ताख्यजीवायाम् ।

**अपमण्डल** न० अपक्रान्तं मण्डलात् भूमण्डलात् । सिद्धान्तशिरोमण्युक्ते क्रान्तिवृत्ते। ''ग्रहस्यगोले कथिताऽपमण्डलं प्रकल्प्य अक्षावलयं यथोदितम्।'' ''एष भगोल कथितः खेचरगोलोऽयमेव विज्ञेयः । अत्रापमण्डले वा सूत्रधारैरधश्च तस्यैवेति।''

**अपरदक्षिण** अव्य० अपरा च दक्षिणा च। पश्चिमदक्षिणयोरन्तराले नैऋति कोणे।

**अपरपक्ष** पु० अपरः शेषः पक्षः। कृष्णपक्षे स हि चन्द्रस्य वृद्धिह्रासपक्षयोर्मध्ये शेषः, चैत्रशुक्लप्रतिपद्येव वर्षारम्भणात् शुक्लस्य पूर्वत्वम् सुतरां कृष्णस्यापरत्वम्।

**अपवर्त्तन** न० परिवर्त्तने, त्यक्ते, दत्ते च । ''समेन केनाप्यपवर्त्त्येनेति।''(लीला०)

**अपह** त्रि० अपघातकर्त्तरि । तमोऽपहः सूर्यः ।

**अप्रशस्त** त्रि० न प्रशस्तम् । क्षीणे । यावत्पदार्थस्य यत्र उचितत्वम् ततो न्यूनत्वे अस्य प्रवृत्तिः ।

**अबधा** स्त्री० न बध्यतेऽस्यते लम्बेन । लीलावत्युक्ते त्रिकोणादि क्षेत्रे लम्बोभयपार्श्वस्थे भूमिखण्डे। न बाध्यते आबाध्यते वा, अबाधा आबाधाऽप्यत्र। तदानयनञ्च ''त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या। द्विःष्ठा भूरूनयुता दलिताऽबाधे तयोः स्यातामिति''। ''दशसप्तदशप्रमौ भुजौ त्रिभुजे यत्र नवप्रभा मही । अबधे लम्बकं तथा गणितं गाणितिकाशु तत्र मे।''(लीला०)

**अ(ब्ध)ब्द** पु० अवति रक्षति सीमानं । आप्यन्ते व्याप्यन्ते ऋतुमासपक्षतिथिनक्षत्र-योगकरणवारादयो येन । वत्सरे । स च नवविधः। उक्तं यथा सूर्यसिद्धान्ते - ''ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा सौरञ्च सावनं चान्द्रमार्क्षं मनानि वै

नवेति।'' तत्र ब्राह्माब्दमानं ''सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः सन्ध्या-सन्ध्यांशसहितम् विज्ञेयं तच्चतुर्युगम्।'' ''इत्थं युगसहस्रेण भूतसंहारकारकः कल्पो ब्राह्ममहप्रोक्तं शर्वरी तस्य तावतीति।'' ''परमायुः शतं तस्य तयाहोरात्रसङ्ख्यया।'' तथा च सौरैः (४३२००००००००) एतावद्वर्षैस्तस्याहस्तावद्भिश्च रात्रिः तेन द्विगुणितैस्तैः ३६० गुणितैर्ब्राह्माब्दमानम् । अथ दिव्यम् ''मासैर्द्वादशिभिर्वर्षं दिव्यं तदहरुच्यते । तत्षष्टिः षड्गुणा दिव्यं वर्षमासुरमुच्यते।'' इति तत्रोक्तैः ३६० सौरवर्षैर्दिव्याब्दमानम्। ''मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम् न तत्र द्युनिशोर्भेदः।'' इति तत्रोक्तं मन्वन्तरमारमेव प्राजापत्याब्दमानं तच्च – ''युगानां ४३२०००० सप्ततिः सैका मन्वन्तरमुदाहृतम।'' इत्युक्तम् । तेन ७१ गुणितैः ३११०४००० सौरवर्षैः प्राजापत्यम्। पित्र्यं तु ''त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम् । निशा च मासपक्षान्तौ तयोर्मध्ये विभागतः।।'' इत्युक्तेः चान्द्रमास एव पित्र्यमहोरात्रम् । तच्च ३६० गुणितं तद्वर्षमानं तथा च १०८०० चान्द्रदिनैः पित्र्यवर्षमानमिति फलितम् । बार्हस्पत्यन्तु ''वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ । कार्त्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा।''यथा पौर्णमास्यां नक्षत्रसम्बन्धेन तत्संज्ञो मासो भवति तथेति समुच्चयार्थकम्। बृहस्पतेः सूर्य्यसान्निध्यदूरत्वाभ्याम-स्तादुदयाद्वा वैशाखादिषु द्वादशसु मासेषु कृष्णपक्षे पञ्चदशेतिथौ अमायामित्यर्थः। चकारः पौर्णमासीसम्बन्धात् समुच्चयार्थकः। योगो दिननक्षत्रसम्बन्धः कार्तिकादीनि द्वादश वर्षाणि भवन्ति। वैशाखकृष्णपक्षपञ्चदश्याममारूपायां बृहस्पतेरस्ते उदये वा जाते सति तदादि बृहस्पतिर्वर्षं कृत्तिकादिनक्षत्रसम्बन्धात् कार्त्तिकसंज्ञम्। एवं ज्योष्ठाषाढश्रावणभाद्रपदाश्विनकार्त्तिकमार्गशीर्षपौषमाघफाल्गुनचैत्रमासु क्रमशो मृगपुष्यमघापूर्वाफाल्गुनीचित्राविशाखाज्येष्ठाश्रवणापूर्वाभाद्राश्विनीनक्षत्रसम्बन्धान् मार्गशीर्षादीनि भवन्ति। अत्रापि नक्षत्रद्वयत्रयसम्बन्धः चान्द्रमासवत् बोध्यः। तेन यद्दिने बृहस्पतेरुदयोऽस्तो वा तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्संज्ञं बार्हस्पत्यं वर्षं भवतीति तात्पर्यम्। मेषादिसङ्क्रान्तिरुक्ता ''मेषादयो द्वादशैव सौरमाने तु वत्सर'' इति ''सौरन्तु तद्भवेन्मानं भानोर्भगणपूरणादिति'' चोक्तेः ३६० सौरदिवसैः सौरवर्षमानम् । सावनन्तु ''उदयादोदयं भानोः सावनं तप्रकीर्तितम्।'' इत्युक्तम्।

''पञ्चाङ्गरामास्तिथयः खरामाः सार्द्धद्विदस्राः कुदिनाद्यमब्दे''(सि शि०) इति सिद्धान्तशिरोमणि उक्तेः ३६५, दिनानि १५,३०,२२,३० दण्डादिसहितानि सावनदिनानि ''अस्यार्कमासोऽर्कलवः प्रदिष्टस्त्रिंशद्दिनः सावनमास'' इति सिद्धान्त-शिरोमणि उक्तदिशा तन्मासादयो ज्ञेयः। ''त्रिंशता तिथिभिर्मासश्चान्द्र इति''(सू सि०) प्रागुक्तं चान्द्रमानं तच्च ''कालेन येनैति पुनःशशीनां क्रामन् भचक्रं विवरेण गत्योः मासः स चान्द्रोऽङ्कयमाः कुरामाः शून्येषवस्तत् कुदिनप्रमाणम्।''(सि शि०) ३१.५० दण्डादियुतैरेकोनत्रिंशत् कुदिनैश्चान्द्रमासः द्वादशगुणिते च तस्मिन् ३५४.१८ कुदिनैश्चान्द्रवर्षमानम्। नाक्षत्रं यथा ''भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।''(सू सि०) नित्यं प्रत्यहं भचक्रभ्रमणं नक्षत्रसमूहस्य प्रवाहवायुकृतः परिभ्रमः नाक्षत्रं नक्षत्रसम्बन्धि दिनम् । एवं नवसु ब्राह्मादिषु वर्षेषु दर्शितेषु चतुर्णामेव व्यवहारोपयोगिता यथोक्तं '' चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः। बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः।'' तत्र कस्य कुत्रोपयोगस्तदप्युक्तं तत्रैव – ''सौरेण द्युनिशोर्मानं षडशीति मुखानि च। अयनं विषुवच्चैव संक्रान्तेः पुण्यकालता'' इति ''तिथिः करणमुद्वाहः क्षौरं सर्वक्रियास्तथा। व्रतोपवासयात्राणां क्रिया चान्द्रेण गृह्यते'' इति ''सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः। सूत्रकानां परिच्छेदोदिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेनैव गृह्यते।'' चान्द्रेण तु मासवर्षादि गणनापि ''चैत्रे मासि जगत्स्रष्टा ससर्ज प्रथमेऽहनि शुक्लपक्षे समग्रन्तु ग्रहतारोदये सति। प्रवर्तयामास तदा कालस्य गणनामपि । ग्रहान् राशीनृतून् मासान् वत्सरान् वत्सराधिपान् '' इति।

**अब्दप** पु० अब्दं पाति इति । वर्षाधिपे।

**अब्धि** पु० आपो धीयन्तेऽस्मिन् । सरोवरे , समुद्रे च । स च जम्बूद्वीपपूर्वापरादिवर्त्तिता भेदेन चतुर्विधः।

**अब्धिज** पु० चन्द्रः ।

**अब्धिद्वीपा** स्त्री० अब्धिसङ्ख्याता लवणादि सप्तसङ्ख्याता द्वीपा अस्याः। जम्बू प्रभृति सप्तद्वीपवत्यां पृथिव्याम् । ''शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च । द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति।''(सि शि०)

**अभिजित्** त्रि० नक्षत्रचक्रस्य अश्विन्यादिसप्तविंशतिनक्षत्रात्मकतया ज्योतिषे प्रसिद्धम् । आषाढोपरिश्रवणाधःस्थाने अभिजिन्नामकं नक्षत्रम् । आप्योस्यैवाभिजित् प्रान्ते वैश्वान्ते श्रवणस्थितिरित्युक्तं व्याख्यातश्चैतत् रङ्गनाथेन आप्यस्य पूर्वाषाढाया अवसाने, द्यूनराशौ विंशतिकलोनसप्तविंशति भागे अभिजिद्योगतारा।

**अभिहत** त्रि० अभिघातसंयोगवति। गुणिते च। ''अन्योन्यहाराभिहतौ हरांशौ।'' (लीला०)

**अमृतवपुस्** अमृतेनाप्यायितं वपुरस्य । चन्द्रः । स हि कृष्णपक्षे वह्न्यादिभिः कलानामेकैकशः भक्षणेऽपि पुनः यज्ञशिष्टरूपामृतेनाप्याय्यते । ''दिने दिने कला-वृद्धिः पौर्णमास्यां तु पूर्णता''।

**अम्बुप** पु० अम्बूनि पाति पिबति वा। जलेश्वरे वरुणे। ''रक्षोऽम्बुपानिलशशी-शपुराणि चाष्टौ।''

**अयन** न० गतौ, दक्षिणत उत्तरस्याम्, उत्तरतश्च दक्षिणस्यां सूर्य्यस्य चन्द्रस्य च गतौ। तथा हि द्वादशराश्यात्मकस्य राशिचक्रस्यार्धं मकरावधि मिथुनपर्यन्तं राशिषट्कं क्रमेण उत्तरायनतं तत्र स्थितोऽर्कचन्द्रो वा स्वगत्या प्राचीं गच्छन्नपि किञ्चित् किञ्चित्तिर्यग्गत्या उत्तरामभिक्रामति। एवं कर्कटावधि धनुपर्यन्तं राशिषट्कं क्रमेण दक्षिणावनतं तत्र स्थितोऽर्कचन्द्रो वा प्राग्वत् दक्षिणामेवाभिक्रामति सेयं गतिरयन-शब्देन ज्योतिषे व्यवह्रियते। तत्र सूर्य्यस्यायनं सौरैः षड्भिर्मासैरेकं भवतीति च तत्रैव प्रसिद्धम्। नभोमण्डले प्रवहानिलेन पश्चाद्गत्या बभ्रम्यमाणस्य राशिचक्रस्य निराधारतया दोलायमानत्वेन सप्तविंशांशपर्यन्तं प्राक् पश्चाच्च गतिर्भवति । क्रान्तिस्थानच्च अष्टमासाधिक षट्षष्टिवर्षैरेकैकमंशमतीत्य प्राक्, पश्चाद्वा चलतीति अष्टादशशतवर्षैः सप्तविंशांशपर्यन्तं प्राक् गत्वा पुनः पश्चात्, पश्चाद्गत्वा च पुनः प्रागवलम्बते। यदा चैवं राशिचक्रस्यायनस्थानं प्राक् गच्छति तदा राशिचक्रनिर्दिष्ट-मेषादिस्थानात् उक्तकालभेदेनेकैकांशातिक्रमेण क्रमशः प्राचि, प्राक्तरे, प्राक्तने वा स्थाने रव्यादि ग्रहाणां प्रभापुञ्जसञ्जारः। यदा तु पश्चादवलम्बते तदा निर्दिष्टमेषा-दिस्थानात् तथैव परे, परतरे, परतमे, च स्थाने ग्रहाणां प्रभापुञ्जसञ्जार इति भेदः। इदानीञ्च पश्चिमायनं तेन राशिस्थानात् पश्चादेव ग्रहप्रभापुञ्जसञ्जारः। तथा च

ज्योतिषोक्त गणितरीत्या मीनान्तात् पश्चादेकविंशांशे एवेदानीं विषुवादिसङ्क्रान्तिर्भवति। एवं विष्णुपद्यादीनामपि तत्तदंश एव ग्रहप्रभापुञ्जसञ्जारः। अयश्चायनानुसारेण ग्रहप्रभापुञ्जसञ्चारस्वीकारः दिनमानविशेषस्य लग्नपरिमाणस्य छायापदविशेषस्य, च बोधार्थमिति सिद्धान्ते प्रसिद्धम्।

**अयनकाल** पु० अयधारः कालः। अयनांशाधारे काले ।

**अयन(च)वलन** न० अयनांशस्य प्राक् पश्चाद्वा स्थानान्तरचलने ।

**अयनज** पु० अयनात् राशीनां स्वस्वस्थानचलनात् जायते। अयनांशजाते मासादौ।

**अयनभाग** पु० अयनज्ञापको भागः । अयनांशे ।

**अयनमास** पु० अयनकृतः मासः। अयनांशानुसारेण दिनमानदिनज्ञानार्थे कल्पिते मासे ।

**अयनसंक्रम** पु० अयनांशानुसारेण सङ्क्रमः। मेषादिषु राशिषु अयनांशानुसारेण ग्रहाणां प्रभापुञ्जसञ्चारे।

**अयनसङ्क्रान्ति** स्त्री० अयनेन राशिचक्रस्य पश्चात् , प्राग्वागत्या कृता सङ्क्रान्तिर्ग्रहाणां प्रभापुञ्जस्य सञ्चारः। चलसंक्रान्तौ, संक्रान्तिस्त्रिविधा-मध्या-चला-अचला चेति भेदात् मध्यानुपदं वक्ष्यते । मेषादिभिः द्वादशभिः स्थानैर्विभक्तस्य निराधारतया स्थितस्य राशिचक्रस्य दोलायमानतया प्राक् पश्चाद्वा निर्दिष्ट-मेषादिस्थानात् पश्चात् पूर्वं वा राश्यान्तरे मण्डलगतिं विनापि ग्रहाणां प्रभापुञ्जमात्रसंचारः चलसंक्रान्तिः अनियतस्थानतया चलत्वात् । निर्दिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चारः अचलसंक्रान्तिः राशिसंक्रान्तिरिति चोच्यते तस्या नियतमेकस्थान एव जायमानत्वादचलत्वम् । अनयैव संक्रान्त्या यया मासादिव्यवहारे न दोषः, चलसंक्रान्त्या तु बहवो दोषास्तथा निरूप्यते तथा हि ग्रहाणामाक्रान्तराशितो राश्यन्तरक्रमणं संक्रान्तिरित्युच्यते । सा च द्विधा मध्यमा स्पष्टा च । षट्कर्म्मसंस्कृतो मध्यग्रहो यदा राश्यन्तरं संक्रामति तदा मध्यसंक्रान्तिरित्युच्यते। यदा तु स्पष्टीकृतसंस्कारो ग्रहो राश्यन्तरं संक्रामति सा स्पष्टसंक्रान्तिरित्युच्यते।

**अयनांशज** पु० अयनस्य अंशः तज्जः । प्राथमिकक्रान्तिवृत्तारम्भस्थानातिक्रमेण जाते मासे ''अयनांशजमासान्ते व्युत्क्रमेणादितो बुधैः''।

**अयवस्** पु० न युतः पृथग्भूतौ चन्द्रसूर्यौ । अर्धमासे पक्षे ।

**अयुत** त्रि० न युतः संयुक्तः सम्बद्धो वा । असंयुक्ते, असम्बद्धे च । दशसहस्र सङ्ख्यायाम् । ''सूर्य्याब्धिसंख्यया द्वित्रसागरैरयुताहतैः।''(सू सि०)

**अरुणोदय** पु० अरुणस्यार्कस्य तत्किरणस्योदयो यत्र। ''चतस्रो घटिकाः प्रातररुणोदय उच्यते''। इत्युक्ते सूर्योदयात् प्राचि चतुर्दण्डात्मके काले ।

**अर्क** पु० सूर्य्ये, ''अर्केन्द्वोः क्रान्तिविश्लेषो दिक्साम्ये युतिरन्यथा।''(सू सि०)

**अर्कभ** न० अर्काक्रान्तं भं नक्षत्रम् । सूर्य्याक्रान्ते नक्षत्रे।

**अर्केन्दुसङ्गम** पु० अर्कः इन्दुश्च सङ्गच्छते यत्र। अमावास्यायां तिथौ तद्दिने हि सूर्य्याचन्द्रमसोरेकराश्येकावच्छेदेन उपर्य्यधोभावेन स्थितिः। ''सूर्य्याचन्द्रमसोर्य्यः परः सन्निकर्षः साऽमावास्येति''

**अर्द्धगर्भ** त्रि० अर्द्धे वत्सरस्यार्द्धे मार्गादौ पौषादौ वा ब्रह्माण्डस्यार्धे गगने वा गर्भं गर्भस्थानीयमुदकं यस्य। सूर्य्यरश्मिभेदे ते हि मार्गादौ पौषादौ च भूमिस्थम् उदकमाकृष्य गर्भरूपेण गगने धारयन्ति इति ज्योतिषप्रसिद्धम् ''तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने'' इत्यादिना।

**अर्बु** न० दशकोटिसंख्यायाम्। तत्संख्या तेषु च एकादिकोटिसंख्या ''दशगुणोत्तरा उक्ता अर्बुदमवजंखर्वनिखर्वमहापद्मशङ्कवस्तस्यात्।''

**अलकनन्दा** स्त्री० अलति पर्य्याप्नोति। अलका नन्दयतीति। गङ्गायाम्। ''विष्णुपदी विष्णुपदात् पतिता मेरौ चतुर्द्धास्मात्। विष्कम्भाचलमस्तकशस्तसरः सङ्गता गता वियता। सीताख्या भद्राश्वं सालकनन्दा च भारतं वर्षम्।''(सि शि०)

**अवनि**(नि) स्त्री० भूमौ। ''सुसाधितायामवनौ बिन्दुं कृत्वा ततो लिखेत्।''(सू सि०)

**अवम्** त्रि० प्रकृतानां सावनानाञ्चान्द्राणञ्चान्तरमवमानी उच्यते। ''सावनदिनेभ्य–श्चान्द्राहा यायङ्गिरधिकास्ते दिनक्षयाहा'' इति च। दिनक्षये। तदानयनप्रकारश्च ''शशाङ्कमासोनितसावनेन त्रिंशद्धताः लब्धदिनैस्तु चान्द्रैः। रुद्रांशकोनाब्धिरसैः क्षयाहः, स्यात् सावनो तश्च युगेऽनुपातात्।''(सि शि०) युगे चान्द्राणां सावनानां च यदन्तरं तान्यवमानि। तत्र एकस्मिन् मासे चान्द्रसावनान्तरं कुदिनात्मकं गृहीतम्।

तत्र दिवसः शून्यम् अष्टाविंशतिर्घटिकाः दशपानीयपलानि इदमेकस्मिन् चान्द्रमासे त्रिंशत्तिथ्यात्मके कुदिनात्मकमवसखण्डम् । यद्यनेन त्रिंशद्दिनानि चान्द्राणि लभ्यन्ते तदा सम्पूर्णैनैकेनावमेन कियन्तीति त्रैराशिकेन लब्धैः रुद्रांशकोनाब्धिरसैः एकः क्षयाहो भवति स च सावनः। एवं कल्पेऽपि अनुपातात्। सावनान्यवमानि स्युश्चान्द्रेभ्यः साधितानि चेत्। सावनेभ्यस्तु चान्द्राणि तच्छेषं तद्वशात्तथा।''(सि शि०) इति कल्पेऽवमप्रमाणञ्च दर्शितं तत्रैव। दिनक्षयास्तत्र सहस्रनिघ्नाः खवाणवाणा– श्व्यहिखेषुदस्राः अन्तरं तरणिचन्द्रचक्रजं यद्भवेत् स विधुमाससंचयः। चन्द्रवक्रदिवसैक्यमूनितं चन्द्रमासभदिनैर्दिनक्षयाः। अथ चन्द्रचक्रदिनैक्ये चन्द्रमास– भदिनैक्येन वर्जिते क्षयाहाः स्युः। अत्र वासना। चन्द्रभगणा रविभगणरूनाश्चान्द्रमासाः स्युः। अतो विपर्य्ययाश्चान्द्रमासोनाश्चन्द्रभगणा रविभगणा भवन्ति। तैरूना भभ्रमाः सावना दिवसा भवन्ति। चान्द्राहाः अयाहा भवन्ति प्रमिता०। तिथ्यन्तद्व्यमेको दिनवारः स्पृशति यत्र तद्भवत्यमवदिनम्।

**अवमति** स्त्री० अवज्ञायाम्,अनादरे,तिरस्कारे च। वमा तिथिः। ज्योतिषोक्ते दिनक्षये।

**अवमतिथि** स्त्री० स्युस्तिस्रस्तिथयो वारे एकस्मिन् ।

**अवमदिन** न० तिथ्यन्तद्वयमेकोदिनवारी यत्र तद्भवत्यमवदिनम्। ज्योतिषोक्ते दिनक्षये।

**अवरोह** पु० अवतरणे, (नामा) ऊर्द्ध्वदेशान्निम्नदेशगमने।

**अवि** पु० सूर्य्ये। मेषे।

**अव्यथिष** न० सूर्य्ये,समुद्रे च,धरायां,रात्रौ च।

**अश्लेषा** स्त्री० न श्लिष्यति यत्रोतृपन्नेन शिशुना। सप्तविंशतिधा विभक्तराशिचक्रस्य नवमे नक्षत्रे। ''रुद्राब्धि रामशुचिवेदशतद्वियुग्मदन्ता बुधैर्निगदिताः क्रमशोभताराः। यथा त्रिताराश्विनो भरणी च। षट्ताराः कृत्तिका। पञ्चतारा रोहिणी। त्रितारा मृगशिरा। एकतारा आर्द्रा,चतुस्तारा पुनर्वसुः, त्रितारा पुष्या,पञ्चतारा अश्लेषा मघा च त्रितारा पूर्वफल्गुनी,द्वितारा उत्तरफल्गुनी, पञ्चतारा हस्ता,एकतारा चित्ता,स्वातिश्च सप्ततारा विशाखा,त्रितारा अनुराधा ज्येष्ठा च। एकादशतारः मूला,चतुस्तारा पूर्व्वाषाढा,त्रितारा उत्तराषाढा,श्रवणा चतुस्तारा धनिष्ठा शततारा शतभिषा। द्वितारा पूर्व्वभाद्रपदा उत्तरभाद्रपदा च द्वात्रिंशत्तारा रेवती यदा योगतारा।''

**अश्वयुज्** स्त्री० अश्वेन हयमुखाकारेण युज्यते। अश्विनीनक्षत्रे तस्य तथाकारत्वम्। अश्वेन हयाकारवता नक्षत्रेण युज्यते पौर्णमास्यस्मिन् मासे। चान्द्राश्विनमासे।

**अश्विनी** स्त्री० अश्वस्तदुत्तमाङ्गाकारोऽस्त्यस्य । सप्तविंशतिधा विभक्तराशिचक्रस्य प्रथमे भागे। अस्यास्तथाकारत्वम्। ''अश्विनीमघमूलानां गण्डा आद्यास्त्रिनाडिकाः'' ज्यो० नक्षत्रपरत्वे न०। पुष्याश्विहस्ता लघुः ज्यो०। अश्वाया आकारोऽस्त्यस्याः।

**अषाढ(शाड)** पु० अषाढ(शाड)या युक्ता पौर्णमासी आषाढी(शाडी)सा यत्र मासे। वैशाखादितस्तृतीये चान्द्राषाढ(ड)मासे। आषाढी पूर्णिमा।

**अषाढा(डा)** स्त्री० अश्विन्यवधिके पूर्व्वादिके विंशे, उत्तरादिके एकविंशे च नक्षत्रे।

**अष्टमी** स्त्री० अष्टानां पूरणी। षोडशकलात्मकचन्द्रस्य अष्टमकलाक्रियारूपायां स्वनामख्यातायां तिथौ अष्टसंख्यापूरण्याञ्च।

**अस्तमन** न० अस्थस्य अनः गतिः। भूगोलकक्षया तिरोधानेन, सूर्य्यादिरदर्शनगमने ''तिरोधानञ्च यत्तैति तदेवास्तमनं रवेः। नैवास्तमनमर्कस्य नोदयः सर्व्वदा सतः''।

**अस्तमय** पु० अस्तोमीयते ज्ञायते यत्त। प्रलये,सूर्य्यादिरदर्शने।

**अहः(हस्क)कर** पु० अहः दिनं करोति इति। सूर्य्ये। अहः शब्दश्च दिवस एव प्रसिद्धः।

**अहन्** न० न जहाति न त्यजति सर्वथा परिवर्त्तनम् । केचित्तु दिनरात्रिपरः यथा ''मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते।''(सू सि०) ''लघ्वक्षरसमामात्रा निमेषः परिकीर्त्तितः। ततः सूक्ष्मतरः कालोनोपलभ्योभृगूत्तम। नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः। द्वौ निमेषौ त्रुटिर्ज्ञेयः प्राणः पञ्चत्रुटिः स्मृतः। विनाडिका तु षट्प्राणा तत्षष्टिर्नाडिका स्मृता। अहोरात्रं तु तत्षष्ट्या नित्यमेतत् प्रकीर्ततम् । त्रिंशन्मुहूर्ताच्च तथा अहोरात्रे प्रकीर्तिताः। तत्र पञ्चदशप्रोक्ता राम। रात्रौ दिवा तथा। उत्तरां तु यदा कावा क्रमादाक्रमते रविः। तदा क्रमाद्धवेद्वृद्धिर्दिवसस्य महाभुज, तदाश्रितमुहूर्तानां तदा वृद्धिः प्रकीर्त्तिता। दिनवृद्धिर्यदा राम दोषाहानिस्तदा भवेत्। तदाश्रितमुहूर्त्तानां हानिर्ज्ञेया तथा तथा। यदा तु दक्षिणां काष्ठां क्रमादाक्रमते रविः। दिवसस्य तदा हानिर्ज्ञातव्या तावदेव तु। क्षीयन्ते तस्य हानौ च तन्मुहूर्तास्तथैव च। रात्र्याश्रिताश्च वर्द्धन्ते रात्रयश्च क्रमेण तु। यदा मेषं सहस्रांशुस्तुलाञ्चैव प्रपद्यते। समरात्रिन्दिवः कालो मुहूर्तश्च तदा समः''।

दक्षोक्तविभागः तच्चाह नवविधम् सूर्यसिद्धान्ते – ''ब्राह्मं दिव्यं तथा पैत्र्यं प्रजापत्यं गुरोस्तथा। सौरञ्च सावनञ्चान्द्रमार्क्षमानानि वै नव।''तत्र ब्राह्मम् ''इत्थं युगसहस्रेण भूतसंहारकारकः। कल्पो ब्राह्ममहःप्रोक्तः शर्वरी तस्य तावतीति।'' दिव्यमुक्तं तत्रैव ''मासर्द्वादशभिवर्षं दिव्यं तदहरुच्यते। सुरासुराणामन्योन्यमहोरात्रं विपर्य्ययात् यत् प्रोक्तं तद्धवेद्दिव्यं भानोर्भगणपूरणात्।'' पित्र्यमाह ''त्रिंशत्तिथ्यात्मको मासश्चान्द्रः पित्र्यमहः स्मृतम् निशा च मासपक्षान्तौ तयोर्मध्ये विभागतः।'' ''भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।'' मन्वन्तरव्यवस्था च प्रजापत्यमुदाहृतम्।'' इति ''संक्रान्त्यासौरमुच्यते'' इति च सूर्यसिद्धान्ते बार्हस्पत्यमब्दशब्दे उक्तम्। तेषु नवसु मध्ये चतुर्भिरेव व्यवहारः ''चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः बार्हस्पत्येन षष्ठ्यब्दं ज्ञेयं नान्यैस्तु नित्यशः।'' तत्र सौरनाक्षत्रादिप्रमाणमुक्तम् – ''नाडीषष्ठ्या तु नाक्षत्रमहोरात्रं प्रकीर्त्तितम्। तत्त्रिंशताभवेन्मासः सावनोऽर्कोदयैस्तथा'' इति। चान्द्रमाह ''अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी तच्चान्द्रमसमंशैस्तु ज्ञेया द्वादशभिस्तिथिः।'' एतेषां कार्य्यभेदे ग्रहणमाह। स एव तिथिः करणमुद्वाहः क्षौरं सर्व्वाः क्रियास्तथा। व्रतोपवासयात्राणां क्रिया चान्द्रेणगृह्यते। उदयादुदयः भानोः सावनं परिकीर्त्तितम् । सावनानि स्युरेतेन यज्ञकालावधिस्तु तैः। सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेनैव गृह्यते।

**अहर्गण** पु० अहां गणः। दिनवृन्दे दिनसमूहे। ग्रहणां मध्यभावादिज्ञानसाधनानि सृष्ट्यवधि श्वेतवराहकल्पावधि कल्यारम्भावधि वा इष्टदिनपर्य्यन्तं यानि दिनानि गतानि तेषां समूहे। तत्र सृष्ट्याद्यर्हगणस्तावत् ''इत्थं युगसहस्रेण भूतसंहारकारकः। कल्पोब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती। परमायुः शतं तस्य तयाहोरात्रसंख्यया। आयुषोऽर्द्धमितं तस्य शेषे कल्पोऽयमादिमः। कल्पादस्माञ्च मनवः षट् व्यतीताः ससन्धयः। वैवस्वतस्य च मनोर्युगानां त्रिघनो गतः। अष्टाविंशाद्युगादस्माद्यातमेतत् कृतं युगम् । अतः कालं प्रसंख्याय संख्यामेकत्र पिण्डयेत्।''(सू सि०) तदानयनप्रकार उक्तः। तत्र सृष्ट्यादिकस्य अहर्गणस्यानयनमित्थम् । ब्राह्मदिनमानं मनुष्यपरिमाणेन ४३२०००००० वर्षाः रात्रिमानञ्च तथा, इत्यहोरात्रमानम् ४८६४००००००० वर्षाः ब्राह्माहोरात्रमानम् ३६० गुणितं तस्य वर्षमानम् १७५१०४००००००००

एवं वर्षशतं ब्रह्मणः परमायुः १७५०४०००००००००० तस्यायुषोऽर्द्धम् ८७५५२०००००००००० वर्षागताः। मन्वन्तरसंख्या ३०६७२०००० षड्भिर्गुणिताः १८४०३२०००० एते वर्षाः षण्णां मनूनां गताः। तथा सन्धयश्च सप्त कृतयुगप्रमाणा गतास्तत्र युगसन्धिमानम् १७२८००० कृतप्रमाणवर्षाः सप्तभिर्गुणिताः १२०९६०००वर्षाः। सप्तमस्य वैवस्वतमनोः २७ युगानि गतानि। तेषां समष्टिः ११६६४०००० वर्षाः सत्यादीनां त्रयाणां गतानां युगानां मानम् ३८८८०००। एवमादिसृष्टितः वर्त्तमानयुगान्तर्गतद्वापरयुगपर्यन्तम्। ८७५५२-१९७२९४४००० वर्षाः गताः परार्द्धतः १९७२९४४००० वर्षा गताः। वर्त्तमान महायुगात् ३८८८००० वर्षागताः। एवमब्दपिण्डं कृत्वा तत्र कलियुगगताब्दपिण्डं योज्यम्। एतानि च सौररूपाणीति ३६० गुणितानि सौरदिनवृन्दानि गतानि भवन्ति। ''मध्यमग्रहभुक्तिश्च सावनेन'' इत्युक्तेः सावनैरेव ग्रहमध्य भावज्ञानमतस्तेभ्यः सिद्धान्तशिरोमणौ चान्द्रसावनानयनं दर्शितम् ।

**अहर्दिव** न० अहश्च दिवा च। प्रतिदिने इत्यर्थे।

**अहर्नाथ** पु० अहः नाथः। दिनपतौ,सूर्य्ये।

**अहर्निश** न० अहश्च निशा च। अहोरात्रयोः तयोः समुच्चयो मासः। ''पितॄणां तदहर्निशम्''। ''तस्य सोऽहर्निशास्यान्ते प्रसुप्तः प्रतिबुध्यत'' मनुः।

**अहर्बान्धवः** पु० अह्नि बान्धव इव प्रकाशकत्वात्। सूर्य्ये।

**अहर्मणि** पु० अहः मणिरिव प्रकाशकत्वात्। सूर्य्ये।

**अहस्कर** पु० अहःकरवत्। सूर्य्ये।

**अहस्पति** पु० अहःपतिवत्। सूर्य्ये।

**अहिभानु** पु० अहिर्व्याप्यो भानुस्तद्गतिरस्य। सूर्य्यगतिहेतौ वायौ प्रवाहानिलेनैव सूर्य्य गतेर्ज्योतिषोक्तैस्तथात्वम्।

**अहोरात्र** पु० अहश्च रात्रिश्च। सूर्य्योदयद्वयमध्यवर्त्तिकाले। षष्टिदण्डात्मके मानुषे दिने। ''त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रस्तु तावतः। अहोरात्रे विभजते सूर्य्यो-मानुपदैविके''।

**आकलन** न० ग्रहणे,संग्रहे,गणने च।

**आकाशकक्षा** स्त्री० ब्रह्माण्डपुटवेष्टने लोकालोकपर्वतरूपसीमापर्य्यन्तव्यापके सूर्य्यकिरणसञ्चारावधिभूते वृत्ताकारे गगनस्थे गोलक्षेत्रे। तन्मितिरुक्ता ''कोटिघ्नैर्नख नन्दषट्कनखभूभूभृद्भुजगेन्दुभिर्ज्योतिः शास्त्रविदोवदन्ति नभसः कक्षामिमां योजनैः १८७१२०६९२०००००००००। तद्ब्रह्माण्डकटाहसम्पुटतटे केचिज्जगुर्वेष्टनम् केचित् प्रोचुरदृश्यकगिरिं पौराणिकाः सूरयः। करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम् । दिनकरकरनिकरनिहतमनसो नभसः परिधिरुदितस्तैः।''(सि शि०) तथा च सूर्य्यकिरणप्रचारावधिस्थानस्य नभः कक्षात्वेन कल्पितम्। वस्तुतोऽपरि-च्छिन्नत्वादाशस्य ततोऽपि सत्त्वात् न तन्मात्रमानम्। अतएव ''ब्रह्माण्डमेतन्मितमस्तु नो वेति ब्रह्माण्डस्यानिर्द्धारितप्रमाणकत्वम्''।

**आग्नेय** त्रि० अग्नेरिदम् अग्निर्देवता वास्य। अग्निदेवताके।

**आग्रहायण** पु० अग्रहायण्या मृगशीर्षनक्षत्रेण युक्ता पौर्णमासी। आग्रहायणी अस्त्यत्र मासे। चान्द्रमार्गशीर्षे मासि अग्रहायण्या युक्ता पौर्णमासी। चान्द्रमार्ग-शीर्षमासपौर्णमास्याम्। यथा च मृगशीर्षनक्षत्रसम्बन्धात् मासस्य मार्गशीर्षत्वम्। तथोक्तम् ''नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्व्वान्तयोगतः''(सू सि०) इति पूर्णमास्यां मृगशीर्ष-नक्षत्रयोगात् मार्गशीर्षश्चान्द्रमासः मृगशीर्ष एव अग्रहायणीनामा पौर्णमास्यां तत्सम्बन्धयोग्यत्वमेव तदर्थः अत एव ''कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम्। अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्।।''

**आग्रहायणिक** पु० आग्रहायणो पूर्णिमाऽस्मिन्मासे। चान्द्रमार्गशीर्षे मासि।

**आघृणि** पु० आगतो घृणिर्दीप्तिरस्य। सूर्य्ये।

**आत्यन्तिकप्रलय** पु० तुरीयः आत्यन्तिकः प्रलयः। तत्र विशेषमाह ''वृद्धिर्विधेरह्नि भुवः समन्तात् स्याद्योजनं भूभवभूतपूर्वैः। ब्राह्मे लये योजनमात्रवृद्धेर्नाशो भुवः प्राकृतिकेऽखिलायाः। दिनेदिने यन्म्रियते हि भूतैर्दैनंदिनं तं प्रलयं वदन्ति। ब्राह्मं लयं ब्रह्मदिनान्तकाले भूतानि यद्ब्रह्मतनुं विशन्ति। ब्रह्मात्यये यत् प्रकृतिं प्रयान्ति सर्वाण्यतः प्राकृतिकं कृतीन्द्राः। लीनान्यतः कर्मपुटान्तरत्वात् पृथक् क्रियन्ते प्रकृतिर्विकारैः। ज्ञानाग्निदग्धाखिलपुण्यपापा मनः समाधाय हरौ परेशे। यद्योगिनो यान्त्यनिवृत्तिमस्मादात्यन्तिकं चेति लयश्चतुर्धा।''(सि शि०) अत्र लयो भूतविनाशः।

स तु साम्प्रतं प्रत्यहमुत्पद्यते स दैनंदिन उच्यते। यो ब्रह्मदिनान्ते चतुर्युगसहस्रावसाने लोकत्रयस्य संहारः स ब्राह्मो लय उच्यते। तत्राक्षीणपुण्यपापा एव लोकाः कालवशेन ब्रह्मशरीरं प्रविशन्ति। तत्र मुखं ब्राह्मणः, बाह्वन्तरं क्षत्रियाः, ऊरुद्वयं वैश्याः,पादद्वयं शूद्राः। ततो निशावसाने पुनर्ब्रह्मणः सृष्टिं चिन्तयतो मुखादिस्थानेभ्यः कर्मपुटान्तर-त्वाद्ब्राह्मणादयस्तत एव निःसरन्ति। तस्मिन् प्रलये भुवो योजनमात्रवृद्धेर्विलयो नाखिलायाः। अथ यदा ब्रह्मण आयुषोऽन्तस्तदा यः प्रलयः स महाप्रलय उच्यते। तत्र ब्रह्मा ब्रह्माण्डे,तत् पाञ्चभौतिके,भूर्जले,जलं तेजसि,तेजो वायौ,वायुराकाशे, आकाशमहंकारे, अहंकारो महत्तत्त्वे,महत्तत्त्वं प्रकृतौ। एवं सकलभुनलोका अक्षीणपुण्यपापा एवाव्यक्तं प्रविशन्ति। यदा भगवान् सिसृक्षुः प्रकृतिपुरुषौ क्षोभयति। तदा तानि भूतानि कर्म्मपुटान्तरत्वात् प्रकृतेः स्वत एव निःसरन्ति। यथाह श्रीविष्णुपुराणे पराशरो जगदुत्पत्तिकारणम् । ''प्रधानकारणीभूता यतो वै सृज्यशक्तय'' इति सृज्यशक्तयस्तत्कर्माणि। तान्येव सृष्टौ मुख्यं कारणम् । इतराणि निमित्तकारणानि। अन्यैरप्युक्तम्। ''नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। नह्यात्मनां भवति कर्मफलोपभोगः कायाद्विनेत्यादि''। अस्मिन् प्रलयेऽखिलाया भुवो नाश इत्यर्थः। तथा ''ज्ञानाग्निदग्धाखिलपुण्यपापा योगिनो विषयेभ्यो मनः समादाय समाहृत्व तद्धरौ समाहितं कृत्वा यान्ति देहं त्यजन्ति। अनिवृत्तिं यान्ति। स आत्यन्तिको लय इति''।

**आन्तरि(री)क्ष** त्रि० अन्तरि(री)क्षे भवः। आकाशभवे।

**आपूर्य्यमाण** त्रि० सूर्य्यकिरणैः पूर्य्यमाणचन्द्रस्याधारे पक्षे। सम्यक् पूर्य्यमाणे।

**अबाधा** त्रि० पीडायाम्। तापत्रये क्लेशे च।

**आयन** न० अयनमेव। सम्यगामने ''आयने ते परायणे दूर्व्वा रोहन्तु पुष्पिणीः''। अयनस्येदम्। ग्रहाणां दक्षिणोत्तरगमनरूपायनस्य। तच्च आयनवलनायनदृक्कर्म्मादि ज्योतिषप्रसिद्धं तत्रायनवलनं यथा –''युतायनांशोडुपकोटिशिञ्जनी जिनांशमौर्व्या गुणिता विभाजिता। द्युजीवया लब्धफलस्य कार्मुकम् भवेच्छशङ्कायन-दिक्कमायनम्।''(सि शि०) ''ग्रहस्य सायनांशस्य कोटिज्या जिनांशज्यया गुण्या द्युज्यया भक्ता फलस्य चापमायनं वलनं भवति। यस्मिन्नयने ग्रहोवर्त्तते तद्दिक्

भवति''। आयन दृक्कर्म सिद्धान्तशिरोमणौ उक्तं यथा– ''आयनं वलनमस्फुटेषुणा संगुणं द्युगुणभाजितं हतम्। पूर्णपूर्णधृतिभिर्ग्रहाश्रितव्यक्षभोदयहृदायनाः कलाः। अस्फुटेषुवलनाहतिस्तु या यष्टिहृत् फलकलाः स्युरायनाः। ता ग्रहेऽयनपृषत्कयोः क्रमादेकभिन्नककुभोऋणं धनम्।'' ग्रहस्य यदायनं वलनं तदस्फुटशरेण संगुण्य तद्द्युज्यया भजेत्। फलमष्टादशशतैः १८०० संगुण्यम्। यस्मिन् राशौ ग्रहोवर्त्तते तस्य निरक्षोदयासुभिर्विभजेत्। फलमायनकला भवन्ति। अथ वायनवलनकला अस्फुटेन शरेण संगुण्य यष्ट्या विभजेत्। फलमायनकलाः स्वल्पान्तरा भवन्ती–त्यनुकल्पः। ग्रहो यस्मिन्नयने वर्त्तते तस्यायनस्य ग्रहशरस्य च यद्येका दिक् तदा ता आयनाः कला ग्रहे ऋणं कार्य्याः। यदि तयोर्भिन्ना दिक् तदा धनं कार्याः। एवं कृतायनदृक्कर्मको ग्रहो भवति। अत्रोपपत्तिर्गोले सविस्तराभिहिता। अथेहापि किञ्चिदुच्यते। क्रान्तिवृत्ते यद्ग्रहस्थानचिह्नं तद्यदा क्षितिजे लगति न तदा ग्रहः। यतोऽसौ शराग्रे। शराग्रं हि कदम्बाभिमुखम्। यदोत्तरकदम्बः क्षितिजादुपरि भवति तदा तदुन्मुखेन शरेण ग्रहः क्षितिजादुन्नाम्यते। क्षितिजकदम्बयोरन्तरं तदेवोत्तरमायनं वलनम्। यदा क्षितिजादधः कदम्बस्तदा शरेण ग्रहो नाम्यते क्षितिजकदम्बयोरन्तरं तदा दक्षिणं वलनम्। अतो वलनवशेन ग्रहस्योन्नामनं नामनं च। उन्नामितो ग्रह आदावेवोदितः। नामितः पश्चादुदेष्यति। स च कियता कालेनेति तदायनं त्रैराशिकेन। यदि त्रिज्यातुल्ये कर्णे कदम्बक्षितिजयोरन्तरकला वलनसंज्ञा लभ्यन्ते तदा अस्फुटशरतुल्ये किमिति फलं ग्रहादधोऽवलम्बरूपाः कला भवन्ति। ग्रहस्थाने यद्द्युज्यावृत्तं तत्र ता जीवारूपाः। तासां त्रिज्यावृत्तपरिणामायान्योऽनुपातः। यदि द्युज्यावृत्त एतावती ज्या तदा त्रिज्यावृत्ते कियतीत्येवं याः फलकलास्ता एवासवः। फलस्य धनुः स्वल्पत्वन्नोत्पद्यत इति न कृतम्। तैः क्रान्तिवृत्ते परिणामायान्योऽनुपातः। यदि निरक्षोदयासुभी राशिकला अष्टादश शतानि लभ्यन्ते तदैभिरसुभिः किमिति फलं क्रान्तिवृत्तपरिणताः कला भवन्ति। यदोत्तरं किल वलनमुत्तरश्च विक्षेपस्तदा तेन विक्षेपेणोन्नमितो ग्रहो यावत् क्षितिजं नीयते तावत् क्रान्तिवृत्तग्रहस्थानात् पृष्ठतः क्रान्तिवृत्तं क्षितिजे लगति तदेव स्थानं कृतदृक्कर्मको ग्रहः। किं बहुना गोले क्रान्तिमण्डले यथास्थानं विमण्डलं विन्यस्य तत्र ग्रहं च दत्त्वा चिह्नं कार्यम्। अथ ध्रुवाद्ग्रहोपरि नीयमानं वृत्ताकारं सूत्रं यत्र क्रान्तिवृत्ते लगति तत्र कृतदृक्कर्मकोग्रहः।

एवं ध्रुवाक्षीयमानेन सूत्रेण शरकृतं त्र्यस्रं भवति। क्रान्तिवृत्तग्रहस्यानादग्रतः पृष्ठतो वा आयनकलातुल्येऽन्तरे तत् सूत्रं क्रान्तिवृत्ते लगति। अत आयनकला भुजः, अस्फुटः विक्षेपः कोटिः, शराग्रक्रान्तिवृत्तयोरन्तरे यावत् सूत्रखण्डं स तत्र कर्णः। एतत् त्र्यस्रं वलनत्र्यस्र संभवम्। अतस्त्रैराशिकेन वलनकलानामानयनम्। यदि यष्टिकोट्या वलनकला भुजोलभ्यते तदा अस्फुटविक्षेपकोट्या किमिति फलमायनकला इति सर्वमुपपन्नम्।

**आयस्थान** न० लाभस्थाने,ज्योतिषोक्ते लग्नादेकादशस्थाने च।

**आवह** पु० आवहति आभिमुख्ये न गच्छति।भूवायौ।''भूवायुरावह इह प्रवह-स्तदूर्द्धः।''(सि शि०)

**आवृत** त्रि० कृतावरणे, अप्रकाशीकृते, आच्छादिते।

**आशुग** पु० वायौ,सूर्य्ये च। एतयोः शीघ्रगामित्वात् तथात्वम्। ''शीघ्रोऽल्पभागे बहुभागमन्दे'' इत्यादौ नील०ता०। ग्रहाणां शीघ्रमन्दत्वमापेक्षिकमिति बोध्यम्। तथा च स्वस्वकक्षायां ग्रहाणां तुल्यगतित्वेऽपि कक्षाणामल्पत्वबृहत्त्वाभ्यां गन्तव्यदेशाल्पत्वाधिकत्वभेदात् गतिभेदः। तथा च स्वल्पकक्षास्थग्रहस्य बृहत्कक्षा-स्थग्रहापेक्षया शीघ्रगत्वम् तच्च स्वाभाविकम्। अत्र प्रसङ्गात् ग्रहाणां शीघ्रमन्दगतित्वे कारणमुच्यते तथा हि सर्वेषां ग्रहाणां राशिचक्रस्थस्वस्वकक्षासु तुल्यप्राग्गतित्वेऽपि स्वस्वकक्षाणामल्पत्वबृहत्त्वाभ्याम् अल्पाधिककालाभ्यामेव स्वस्वकक्षास्थ-राशिचक्रस्थस्थानभोगः इत्यतो यस्य कक्षा लघ्वी स शीघ्रगः यस्य च बृहती स मन्दगः इत्युच्यते। एतदभिप्रायेणैव ग्रहाणां राशिभोगे कालभेदो दर्शितः। यथा ''रविर्मास निशानाथः सपाददिवसद्वयम्। पक्षत्रयं भूमिपुत्रो बुधोऽष्टादश वासरान्। वर्षमेकं सुराचार्य्यस्त्वष्टाविंशं दिनं भृगुः। शनिः सार्द्धद्वयं वर्षं राहुः सार्द्धसमां तथा''। सूर्य्यस्य यद्यपि चन्द्रबुधशुक्रापेक्षया मन्दगतित्वम्, तथापि कुजगुरुराहु-शन्यपेक्षया शीघ्रगतित्वात् आशुगत्वम्। स्वस्वकक्षायां सूर्य्ययोगेन च ग्रहाणां पुनः शीघ्रगत्वं सूर्य्ययुक्ता ग्रहाः शीघ्रा इत्युक्तेः। ग्रहाणां शीघ्रकेन्द्रशीघ्रफलादिकम् सिद्धान्तशिरोमणौ दर्शितम्। किञ्च सर्व्वग्रहापेक्षया राशिचक्रस्य शीघ्रगतित्वात् प्रतिदिनं स्वगत्यनुसारेण ग्रहाणां प्राग्गतित्वेऽपि राशिचक्रस्य प्रवहवायुना पश्चात् नीयमानतया तदारूढरव्यादेः पश्चाद्गतित्वभ्रमात् तदनुरूपशीघ्रगत्वमारोप्यते। ग्रहाणां

राशिचक्रभोगार्थं स्वस्वकक्षासु या प्राग्गतिस्तस्या अल्पकालसाध्यत्वे शीघ्रत्वमिति बोध्यम्। एवं ग्रहाणां स्वाभाविक्यां स्वस्वकक्षासु गतौ स्थितायामपि प्रवहानिलेन पश्चाद्भ्रम्यमाणस्य राशिचक्रस्य प्रतिदिनं पृथिवीभ्रमणात् तद्गतेश्च सर्व्वग्रहापेक्षया–ऽतिशीघ्रत्वात्। तत्रच वंभ्रम्यमाणराशिचक्रस्य गतौ तत्स्थग्रहगतित्वारोपेण नौकागतौ तत्स्थवस्तुगतित्वारोपवत् ग्रहाणां राशिचक्रतुल्यशीघ्रगतित्वं पुराणदावुक्तम् यथा ''योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्द्धेन क्रममाण। नमोऽस्तु ते। नवतिर्योजनामाञ्च सहस्राणि च सप्ततिः। यावद्धटिकमात्रेण तावच्चलति भास्करः'' आदित्यहृ०। यदा चेन्द्र्याः पुर्य्याः प्रचलति पञ्चदशभिर्घटिकाभिर्याभ्यां सपांदकोटिद्वयं योजनानां सार्द्धद्वादशलक्षाणि साधिकानि चोपयाति। ''साधिकानि पञ्चविंशति–सहस्राधिकानि'' श्रीधरः। तेन पञ्चदशभिर्घटिकाभिर्यदि२३७७५००० योजनानि तदा ६० दण्डात्मके दिने कानीति चतुर्भिर्गुणितानि तानि प्रत्यहं राशिचक्रगतिमानं तदारोपाच्च सूर्य्यादीनां तथागतित्वमिति बोध्यम्। एतदपि पुराणाश्रितं वस्तुतो–राशिचक्रस्य प्रत्यहं पृथ्वोभ्रमणात् राशिचक्रपरिधिमानमेव। तथा च अल्पकालेन गन्तव्यस्थानगामित्वमाशुगत्वमिति सिद्धम्।

**आशुगामिन्** स्त्री० आशु गच्छति। शीघ्रगामिनि। सूर्य्ये।

**आश्लेष** पु० ईषदेकदेशेन श्लेषः। अश्लेषानक्षत्रे स्त्री०। आश्लेषा नक्षत्रं सर्पाः देवताः।

**आश्वयुज** पु० आश्वयुजी अश्विनीनक्षत्रयुक्ता पौर्णमासी यस्मिन् मासे। शुक्लप्रतिपदादिके दर्शान्ते चान्द्रे आश्विने मासे।

**आश्वयुजक** त्रि० आश्वयुज्यायुक्तो मासः। चान्द्राश्विनपोर्णमास्यायुक्ते मासे स हि तस्यामेव तिथौ उप्तः सन् प्ररोहति वर्द्धते च इति लोकप्रसिद्धिः।

**आश्वयुजी** त्रि० अश्वयुजा, अश्विनीनक्षत्रेण युक्ता पौर्णमासी नक्षत्रेण युक्तः कालः। आश्विनमासीयपौर्णमास्याम्।

**आश्विन** पु० अश्विनी पूर्णिमा यस्मिन् मासे। स्वनाम ख्याते चान्द्रेमासभेदे।

**आषाढ** पु० आषाढी पूर्णिमाऽस्मिन् मासे। स्वनाम ख्याते चान्द्रेमासभेदे।

**आषाढा** स्त्री० राशिचक्रस्थ विंशतितमे एकविंशे च नक्षत्रे। मूलं पूर्व्वाषाढा

प्रथमश्चाप्युत्तरांशकोधन्वी। मकरस्ततपरिशेषं श्रवणा चार्द्धं धनिष्ठाया इत्युक्तेः सा च पूर्व्वा उत्तरा च। तत्र पूर्व्वस्याः प्रथमपादस्य धनूराशिघटकत्वमुत्तरायाश्च शेषपादत्रकस्य मकरराशिघटकत्वम् तत्रार्थे च आषाढभूः मङ्गलग्रहः तस्य तत्र जातत्वात्तथात्वम्।

**आषाढाभव** पु० आषाढायां नक्षत्रे भवति। मङ्गलग्रहे। आषाढाजातोऽप्यत्र। आषाढाभूरप्यत्र।

**आषाढी** स्त्री० आषाढया नक्षत्रेण युक्ता पूर्णिमा नक्षत्रेण युक्तः कालः। आषाढमासीय-पौर्णमास्याम्।

**आहत** त्रि० ताडिते। आघूर्णिते। अभ्यस्ते। गुणिते च। ''सूर्य्याब्धिसंख्यया द्वित्रिसागरै-रयुताहतैः।''(सू सि०)

**आहति** स्त्री० आघाते,ताडने। आगमने। अत्र श्लोके पक्षे आहतिरागतिरित्यर्थः। ''आशाहतिच्छेदवधेन भक्ता लब्धं विभिन्ने गुणनं फलं स्यात्।''(लीला०)

**इक्षुसमुद्र** पु० इक्षुरसस्वादूदकः समुद्रः। समुद्रभेदे। ''लवणेक्षुसुरासर्पिर्दधि-दुग्धजलान्तकाः'' पुरा० तत्स्थलम् सिद्धान्तशिरोमणौ उक्तम्- ''भूमेरर्द्धं क्षार-सिन्धोरुदक्स्थं जम्बुद्वीपं प्राहुराचार्य्यावर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः। दध्नाघृतस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्त्यः।''(सि शि०)

**इदावत्सर** पु० इदाचिह्नितः वत्सरः। वत्सरपञ्चकान्तर्गते वत्सरभेदे। तदानयनप्रकारो यथा ''शकाङ्कात् पञ्चभिः शेषात् समाद्याद्यास्तु वत्सराः। सपरीदानुपूर्व्वास्ते तयोदापूर्व्वका मताः''।

**इन्दु** पु० उनन्ति चन्द्रिकया भुवं क्लिन्नां करोति। चन्द्रे। तद्देवताके मृगशिरोनक्षत्रे ''त्यक्त्वा हरीज्येन्दुकरान्त्यमैत्रे दीपिति''। एकसंख्यायुक्ते, ''सूर्येन्दु भूभातनु-योजनानि।''(सि शि०)

**इन्दुकक्षा** स्त्री० चन्द्रस्य राशिचक्रस्थे परिधौ।

**इन्दुकला** स्त्री० चन्द्रस्य षोडशभागैकभागे। कलाश्च षोडश।

**इन्दुक्षय** पु० इन्दुः क्षीयतेऽत्र। दर्शे तत्र हि इन्दोः कलानां सूर्य्यकिरणस्पर्शात् क्षय इव भवतीति। शतमिन्दु क्षये पुण्यं सहस्रं तु दिनक्षये। चन्द्रस्य क्षये।

**इन्दुज** पु० इन्दोर्जायते। बृहस्पतिभार्य्यातारागर्भे चन्द्रेणोत्पादिते बुधे। ''मन्दामरेज्य-भूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधराघनाः''(सू सि०) इत्यनेन चन्द्रस्थानादुपरि शुक्राच्चाधः।

**इन्दुभ** न० इन्दोश्चन्द्रस्य भं नक्षत्रं राशिर्वा। चन्द्रदेवताके,मृगशिरोनक्षत्रे। कर्कटराशौ च कुजशुक्रबुधन्द्वर्कसौम्यशुक्रावनी भुवाम् - क्षेत्राणिस्युरजादयः। चन्द्रप्रभायाम्।

**इन्दुमण्डल** स्त्री० चन्द्रस्य बिम्बे मण्डलाकारे पदार्थे। तन्मण्डलमानञ्च दर्शितं यथा - ''बिम्ब रवेर्द्विद्विशरर्तु (६५२२) संख्यानीन्दोः खनागाम्बुधि (४८०) योजनानि। भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम्। भूविस्तृति-र्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे।''(सि शि०) रवेर्योजनात्मकबिम्बं मध्यमं द्वियमबाणषट्कतुल्यानि (६५२२) योजनानि। इन्दोस्तु शून्यवसुवेद (४८०) मितानि। अथ राहोरुच्यते। रविबिम्बं भूव्यासेन (१५८१) हीनं (१५१) कृत्वेन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य रविकर्णेन स्फुटेन भजेत्। फलेन भूव्यासतो वर्ज्जित-श्चन्द्रकक्षायां भूभाव्यासो भवति फलानि योजनबिम्बानि। अत्रोपपत्तिः यस्मिन् दिने अर्कस्य मध्यतुल्यैव स्फुटा गतिः स्यात् तस्मिन् दिने उदयकाले चक्रकला-व्यासार्धमितेन यष्टिद्वितयेन मूलमिलितेन तत्रस्थदृष्ट्या तदग्राभ्यां बिम्बप्रान्तौ विध्येत्। या यष्ट्यग्रयोरन्तकलास्ता रविबिम्बकला भवन्ति मध्यमाः। ताश्च द्वात्रिंशत् किञ्चिदधिकैकत्रिंशद्विकलाधिकाः ३२।३१।३३। एवं विधोरपि पौर्णमास्यां यदा मध्यैव गतिः स्पष्टा तदा विध्येत् तस्यैवं द्वात्रिंशत् कलाः ३२। ०। ९। उत्पद्यन्ते। बिम्बकलानां योजनीकरणायानुपातः। यदि त्रिज्याव्यासार्ध एतावत्प्रमाणं बिम्बं तदा पठितश्रुतियोजनैः किमित्येवमुत्पद्यन्ते द्विद्विशरर्तु (६५२२) संख्यानि योजनानि। विधोस्तु खनागाम्बुधि (४८०) मितानीति। प्रमि०। बिम्बमेव गोलस्य व्यासशब्दे नाभिधीयते व्यासारवीन्दुक्षितोगोलकानां क्रमेण तेजोजलमृण्मयानाम्। स्युर्योजनान्या-कृतिबाणषड्भि (६५३२)र्व्योमाष्टवेदैः (४८०) कुगजेषुचन्द्रैः। (१५८१) इति श्रीपतिना विश्वस्थाने व्यासशब्दप्रयोगात् । तस्यैव विष्कम्भ इति संज्ञा। विष्कम्भमान किल यत्र सप्त इति लोका व्यासस्थाने विष्कम्भशब्द प्रयोगात् अत एवार्य्यभट्टेन ग्रासनिरुपणे। शशिविष्कम्भविवर्जितमित्युक्तम्। ''व्यासे भनन्दाग्नि(१९२७) हते

विभक्ते खबाणसूर्य्यैः (१२५०)परिधिः सूक्ष्मः। इति लीलावत्युक्तदिशा रविचन्द्रयो-रुक्तव्यासमानेन परिधिरानेयः। स च रवेः किञ्चिदून (२०४९९) योजनमितः, चन्द्रस्य किञ्चिन्न्यून(१५०८) योजनमितः। तथा च मण्डलशब्दस्य व्यासपरत्वे (४८०) योजनानि परिधिपरत्वे किञ्चिन्न्यूनं (१५०८) योजनानि इन्दोर्मण्डलस्य मानमित्यवधेयम्।

**इन्दुलेखा** स्त्री० इन्दोर्लेखेव। चन्द्रकलायाम्। तदंशजन्यायाम्।

**इन्दुवार** पु० ''आपोक्लिमे (३,६,९,१२) यदि खगाः स किलेन्दुवारो न स्याच्छुभः क्वचन ताजकशास्त्रगीतः'' नी० ता० उक्ते वर्षलग्नतः (३,६,९,१२) स्थानानामन्यतमस्थाने सर्व्वग्रहस्थितिरूपयोगभेदे।

**इन्द्रनक्षत्र** न० इन्द्रस्वामिकं नक्षत्रम्। ज्येष्ठानक्षत्रे। यस्य तत्स्वामिकत्वात् तथात्वम्। इन्द्रनामकं नक्षत्रम्। फल्गुनीनक्षत्रे च। फल्गुनीनक्षत्रस्य इन्द्रनामकत्वमाह।

**इन्द्रज्य** पु० बृहस्पतौ।

**इष** पु० यात्रा सास्मिन् मासे जिगीषूणामस्ति। सौरे चान्द्रे च आश्विने मासि।

**इषिर** स्त्री० गतिशीले।

**इषु** पु० स्त्री० ईष्यते हिंस्यतेऽनेन। ह्रस्वश्च। वृत्तक्षेत्रान्तर्गते जीवावधिपरिधि-पर्य्यन्तकृतसरलरेखायाञ्च। तदानयनप्रकारः सोदाहरणः दर्शितो यथा- ''ज्याव्यास-योगान्तरघातमूलं व्यासस्तदूनोदलितः शरा स्यात्। व्यासाच्छरोनाच्छरसङ्गुणाच्च मूलं द्विनिघ्न भवतीह जीवा। जीवार्द्धवर्गे शरभक्तयुक्ते व्यासप्रमाणं प्रवदन्ति वृत्ते।'' (लीला०)

**इष्ट** त्रि० अभिलषिते। ''इष्टकृतिरष्टगुणिता व्येका दलिता विभाजितेष्टेन।'' (लीला०)

**इष्टकर्मन्** न० इष्टप्रसिद्ध्यर्थं कर्म। लीलावत्युक्ते गणितभेदे तत्प्रकारो यथा- अथेष्टकर्मसु करणसूत्रं वृत्तम् ''उद्देशकालापवदिष्टराशिः। क्षुण्णो हृतोंऽशै रहितो युतो वा। इष्टाहतं दृष्टमनेन भक्तं। राशिर्भवेत् प्रोक्तमितीष्टकर्म।''(लीला०)

**ईशकोण** पु० ईशस्वामिकः कोणः। पूर्वोत्तरायां विदिशि ईशदिगादयोऽप्यत्र। तत्कोणस्य ईशाधिदेवत्वात् तथात्वम्। ''इन्द्रोवह्निः पितृपतिर्नैर्ऋतोवरुणोमरुत्। कुबेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात्'' इत्यमरोक्तेस्तथात्वम्। बृहस्पतेस्तदीशत्वं यात्राद्यर्थतया ज्योति० उक्तम्। ''सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्तिदशमन्त्री च पूर्व्वादिकदिगीश्वरा'' इति निरूप्य ''दिगीशाहे शुभा यात्रा पृष्ठाहे मरणं ध्रुवमिति'' तद्विपरीतदिशि यात्रा निषिद्धा।

**ईहा** स्त्री० चेष्टायाम्,उद्यमे,वाञ्छायाञ्च। ''ईहादेहारथनशःस्याज्जन्मर्क्ष उपतापिते''।

**उच्च** त्रि० उत्क्षिप्य बाहू चीयते, उपर्य्युपरिनिविष्टैरवयवैश्चीयतेऽसौ वा। उच्चाभिमानानि ग्रहाणां गतिभेदकारके भगणस्थे जीवभेदे। तेनैवाकर्षणात् ग्रूहाणा-मुच्चादिगतिसम्भवः। स च द्विविधः शीघ्रोच्चः मन्दोच्चश्च तादृशोच्चतायां कारणञ्च सूर्यसिद्धान्त रङ्गनाथाभ्यां दर्शितं यथा - ''अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः। शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः।''(सू सि०) शीघ्रोच्च मन्दोच्चपातसञ्ज्ञकाः पूर्व्वोक्तपदार्था जीवविशेषाः सूर्य्यादिग्रहाणां गतिकारणभूताः सन्ति। ननु कालेनैव ग्रहचलनं भवतीति कालो गतिहेतुर्नैत इत्यत आहकालस्येति। पूर्व्वप्रतिपादितकालस्य स्वरूपाणि तथा चैषां कालमूर्त्तित्वेन ग्रहगतिहेतुत्वं नासम्भवीति भावः। ननु कालस्य घठ्यादिमूर्त्तित्वादेषां तदात्मकत्वाभावात् कथं कालमूर्तित्वमित्यत आह भगणाश्रिता इति। भगोलस्थक्रान्तिवृत्तानुसृत ग्रहगोलस्थ क्रान्तिवृत्तप्रदेशाश्रिता इत्यर्थः। तथा च ग्रहराश्यादिभोगानां कालवशेनैवोत्पन्नत्वात् तदात्मकानां कालमूर्तित्वमिति भावः। ननु ते दृश्यन्ते कुतो नेत्यत आह आदृश्यरूपा इति। वायवीयशरीरा अव्यक्त-रूपत्वादप्रत्यक्षा इति भावः। एवं च ग्रहाणामुच्चादिसम्भवात् स्पष्टक्रियोत्पन्नेति तात्पर्य्यम्।

**उच्छ(च्छा)य** पु० उन्नततायाम्। उन्नततया हि ऊर्द्धमाश्रीयते इति तस्यास्तथात्वम्। ''उच्छ्रयेण गुणितं चितेः किल क्षेत्रसम्भवफलं घनं भवेत्।''(लीला०)

**उच्छिति** स्त्री० उच्छ्रये उच्चतायाम् उत्कर्षे च। उच्चसंख्यायाम् ''इष्टिकोच्छ्रय-हृदुच्छ्रितिश्चितेः।''(लीला०)

**उज्जय (यि) नी** स्त्री० विक्रमादित्यराजधान्याम् अवन्तीपुर्य्याम् अवन्तीशब्दे विवृतिः। सूर्यसिद्धान्ते तु सामान्येनोक्तम् यथा–''राक्षसालयदेवौकः शैलयो–र्मध्यसूत्रगाः। रोहीतक्रमवन्ती च तथा सन्निहितं सरः। राक्षसालयो लङ्का देवानां गृहरूपः। पर्वतो मेरुरनयोर्मध्ये ऋजुसूत्रं तत् स्थिता देशा रेखाख्याः।''(सू सि०) लङ्कादक्षिणसूत्रस्थास्वनुपयुक्तास्तत्र मनुष्यागोचरत्वादिति नोक्ताः। ज्ञानार्थमुदाहरति। रोहीतकमिति। यथा रोहीतकं नगरभवन्त्युज्जयिनी सन्निहितं सरः कुरुक्षेत्रम्। चकारस्तथेत्यव्ययपरः। तथान्यानि परस्परं सन्निहिततया ज्ञेयानि। ''यथोज्जयिन्या कुचतुर्थभागे प्राच्यां दिशि स्याद्यमकोटिरेव''।

**उडु** स्त्री न० नक्षत्रे,जले च स्त्रीत्वे। ''इन्दु प्रकाशस्तिमितोडुतुल्याः। उत्तम्भि–तोडुभिरतीवतरां शिरोभिः'' माघः।

**उडुचक्र** न० उडूनां चक्रमिव मण्डलम्। नवरत्नमण्डले भचक्रे। उडुचक्रस्वरूपादि सूर्यसिद्धान्ते उक्तम् यथा ''ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते। तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा। मन्दारेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः।''(सू सि०) ब्रह्माण्डान्तः परिधिस्तत्तुल्यमानं वृत्तं व्योमकक्षा वच्चमाणा–काशकक्षोच्यते। तन्मध्ये ब्रह्माण्डमध्य आकाशे भानां नक्षत्राणां सर्वेषां सर्वतस्तुल्योर्ध्वान्तरितानां भ्रमणं भवति। तथा तुल्योर्ध्वान्तरेणाधोधोनक्षत्रेभ्यः शनि–बृहस्पतिभौमार्कशुक्रबुधचन्द्रा अधस्तात् परिभ्रमन्ति। सिद्धा विद्याधराधनाश्चाधस्था–श्चन्द्रादधःस्थिता अधोऽधः क्रमेणाकाशे स्थिताः। प्रवहवायाववस्थानाभावाश्चन्द्रवन्न तेषां परिभ्रमः।

भचक्रपरिधिमानम् सिद्धान्तशिरोमणौ उक्तम् ''अभ्रेष्विभाङ्कगज–कुञ्जरगोऽक्षपक्षाः (२५९८८९८५० योजनानि) कक्षां गृणन्ति गणका भगणस्य चेमाम्।''(सि शि०) तस्य भूमध्यात् उच्छ्रितियोजनानि तु तत्रोक्तानि यथा नागाक्षषड्द्वयरसाग्निकुवेदसंख्यो (४१२६३६५८) नक्षत्रमण्डलभवः श्रवणो निरुक्तः। अस्य च द्वादशधा विभक्तस्य प्रवहवायुना भ्राम्यमाणस्य दिने षण्णामुदयः रात्रौ च षण्णामिति भेदः। ''स्यादुद्गमो निजनिजोदयभानुतुल्ये सूर्य्येऽस्तभास्करसमोऽ–स्तमयश्च भानाम्।'' ताराणां समूहे।

**उडु(डू)प** पु० उडुनि जले पाति। उडूनि उडूर्वा नक्षत्राणि पाति । चन्द्रे स हि ताराणां पतिरतस्तद्रक्षकः। उडूनां दिवा हि सूर्य्यकिरणैरभिभवादप्रकाशत्वेन रात्रौ च प्रकाशवत्त्येन निशाधीशचन्द्रस्य ततपतित्वम्। गीतायामपि ''नक्षत्राणामहं शशी'' इत्युक्तेः तन्मध्ये तस्य श्रेष्ठत्वादपि ''तत्पतिता सलिलमये शशिनि''। तस्य जलमयत्वोक्तेः उडुमयत्वात् जलमयत्वात् तस्य उडुपतित्वं वा बोध्यम् दक्षकन्याश्विन्यादितारापतित्वाद्वा तथात्वम्।

**उडु(डू)पति** पु० उडूनां पतिः। चन्द्रे, जलेशे वरुणे च।

**उडुपथ** पु० उडूनां पन्थाऽ। आकाशे। तत्र हि उडूनां प्रत्यहं प्रवहवायुना भ्रमणात् तथात्वम्।

**उडुराज** पु० उडुषु राजते। चन्द्रे। उडूनां राजा। उडुराजोऽप्यत्र।

**उत्क्रम** पु० अवृद्धिः। व्युत्क्रमे, विपरीतक्रमे। क्रमोत्क्रमान्मेषतुलादिमानम्।

**उत्तर** न० उत्तीर्य्यते प्रकृताभियोगोऽनेन। उदीच्यां दिशि। लङ्कावधिमेरुपर्य्यन्तदेशानाम् भूवलये क्रमश उन्नतत्वात् तत्सन्निहितदेशस्य उन्नत्वादुत्तरत्वम्। अत एव तद्देशस्योच्चत्वादेव च क्रमशस्तत्र उत्तरध्रुवस्यौन्नत्यम् सिद्धान्त शिरोमणौ उक्तम् – ''निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ। तदाश्रितं खे जलयन्त्रवत्तथा भमद्भचक्रं निजमस्तकोपरि। उदग्दिशं याति नरो यथा यथा तथा तथा खान्नतमृक्षमण्डलम्। उदक्ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः।''(सि शि०) तद्दिशः क्रमशः उच्चत्वाच्च दक्षिणस्या अधस्त्वम्। अत एव तद्दिशोऽवाचीत्वम्। तद्दिक्कृतदेशस्यापि उत्तरदिक्स्थत्वे नोत्तरत्वम्।

**उत्तरकुरु** पु० नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदे। वर्षाणां संस्थितिः सिद्धान्तशिरोमणौ उक्ता– ''लङ्कादेशाद्धिमागिरिरुदग्धेमकूटोऽथ तस्मात् तस्माच्चान्यो निषध इति ते सिन्धुपर्य्यन्तदैर्घ्याः। एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला। वर्षाण्येषां जगुरिह बुधा अन्तरे द्रोणिदेशान्। भारतवर्षमिदं ह्युदगस्मात् किन्नरवर्षमतो हरिवर्षम्। सिद्धपुराच्च तथा कुरु, तस्माद्विद्धि हिरण्मयरम्यकवर्षे। माल्यवांश्च यमकोटिपत्तनाद्रोमकाशच्च किल गन्धमादनः। नीलशैलनिषधावधी च तावन्तराल– मनयोरिलावृतम्। माल्यवज्जलधिमध्यवर्ति यत् तत् तु भद्रतुरगं जगुर्बुधाः।

गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः। निषधनीलसुगन्ध-सुमाल्यकैरलमिलावृतमावृतमाबभौ। अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्र-महीतलम्।''(सि शि०) अत्र भूगोलस्यार्धमुत्तरं जम्बूद्वीपम्। तस्य क्षाराब्धेश्च सन्धिर्निरक्षदेशः। तत्र लङ्कारोमकं सिद्धपुरं यमकोटिरिति पुरचतुष्टयं भूपरिधिचतुर्थशान्तरं किल कथितम्। तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सोत्तरा। अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः पूर्व्वापरसिन्धुपर्य्यन्तदैर्घ्योऽस्ति। तस्योत्तरे हेमकूटः। सोऽपि समुद्रपर्य्यन्तदैर्घ्यः। तथा तदुत्तरे निषधः। तेषामन्तरे यथोत्तरम् यथोत्तरम् भारतकिन्नरहरिवर्षाणि। एवं सिद्धपुरादुत्तरतः शृङ्गवान् नाम गिरिः। ततः श्वेतगिरिः। ततो नीलगिरिरिति। तेऽपि सिन्धुपर्य्यन्तदर्घ्याः। तेषामन्तरे च वर्षाणि। तत्रादौ कुरुवर्षम्। तदुत्तरे हिरण्यम्। ततो रम्यकमिति। अथ यमकोटेरुत्तरतो माल्यवान् नाम गिरिः। स तु निषधनीलपर्य्यन्तदैर्घ्यः। तस्य जलधश्च मध्ये भद्राश्वं वर्षम्। एवं रोमकादुत्तरतो गन्धमादनः तस्य जलधेश्च मध्ये केतुमालम्। एवं निषधनीलमाल्यवद्गन्धमादनैरावृतमिलावृतं नाम नवमखण्डम्। सा खर्गभूमिः। अतस्तत्र देवक्रीडागृहाणि''। तत्र प्रधाना नदी भद्राख्या। ''चक्षुश्च केतुमालञ्च भद्राख्या चोत्तरान् कुरुन् याता।''(सि शि०)

**उत्तरदिक्काल** पु० ''रवावुत्तरतः कालः सोमे वायव्यभागके। भौमे तु पश्चिमे भागे बुधे नैऋतकोणके। जीवे च याम्यदिग्भागे शुक्रे आग्नेयकोणके। शनौ तु पूर्वदिग्भागे कालचक्रं प्रकीर्त्तितम्''। रत्नसारोक्ते रविवारे उत्तरदिग्वर्त्तिकालचक्रे। रात्रौ तु वैपरीत्यम्।

**उत्तरदिक्पाश** पु० ''रवौ तु दक्षिणे पाशः सोमे आग्नेयकोणके। भौमे तु पूर्व्वदिग्भागे बुधे ईशानकोणके। जीवे चोत्तरदिग्भागे शुक्रे वायव्यकोणके। शनौ तु पश्चिमे भागे पाशचक्रं प्रकीर्त्तितम्।'' रात्रावेतौ वैपरीत्यात् पाशकालौ यथोदितौ रत्रसा० उक्ते बृहस्पतिवारे उत्तरदिशि यात्रायुद्धादिनिषेधोपयोगिनि पाशचक्रे। एवमन्यदिक्ष्वप्युक्तदिशा पाशोबोध्यः।

**उत्तरदिक्शूल** त्रि० उत्तरदिशि शूलमिवास्त्यस्य। ''ज्येष्ठा पूर्व्वा भाद्रपदा रोहिण्युत्तरफाल्गुनी। पूर्व्वादिषु क्रमाच्छूलाः यात्रादौमरणप्रदाः। शूलाख्यानि च धिष्ण्यामूलसंज्ञाश्च वासराः। यायिनां मृत्युदाः शीघ्रमथ वा चार्थनाशकाः''। भरद्वाजोक्ते उत्तरदिशि यात्रादो वर्ज्यै। उत्तरफल्गुनीनक्षत्रे,बुधवारे च।

**उत्तरदिगीश** पु० ''इन्द्रोवह्निपितृपतिर्नैर्ऋतीवरुणोमरुत्। कुबेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात्'' इत्युक्ते कुबेरे उत्तरदिक्पालादयोऽप्यत्र। ''सूर्य्यः शुक्रः क्षमापुत्रः सैहिकेयः शनिःशशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिकदिगीश्वराः'' इत्युक्ते बुधे एतच्च ''दिगीशाहे शुभा यात्रा पृष्ठाहे मरणं ध्रुवम्'' इत्युक्तेः उत्तरदिशः पृष्ठीभूतदक्षिणस्यां बुधवारे यात्रानिषेधाय। ''प्राच्यादिककुभां नाथाः यथासंख्यं प्रदक्षिणम्। मेषाद्याः राशयो ज्ञेया स्त्रिरावृत्तपरिभ्रमात्'' इत्युक्तेषु कर्कटवृश्चिकमीनेषु राशिषु च तेषु लग्नेषु तत्स्थे चन्द्रे च उत्तरदिग्गमनं शस्तमित्यपि बोध्यम्।

**उत्तरदिग्द्वार** न० उत्तरदिशि द्वारं मुखमस्य। प्राच्यादिषु चतुर्दिक्षु सप्तसप्तानलर्क्षतः ज्यो० उक्तसाभिजित्काष्टाविंशतिनक्षत्रमध्ये २३,२४,२५,२६,२७,१,२। नक्षत्रेषु तानि च यात्रादिषु तत्र दिशि शस्तानि।

**उत्तरदिग्बलिन्** पु० उत्तरस्यां दिशि बली। ''प्राच्यां सौम्यसुराचार्य्यौ याम्यां भास्करभूमिजौ''। शुक्रे,चन्द्रे च।

**उत्तरपश्चिमा** स्त्री० उत्तरास्याः पश्चिमाया अन्तराला दिक्। उत्तरपश्चिमयोरन्तराल–दिशि नैऋतिकोणे। सा विद्यतेऽस्य। नैर्ऋतविदिक्सम्बन्धिनि देशे।

**उत्तरपुरस्तात्** अव्य० उत्तरस्याः पूर्व्वस्या अन्ताराला दिक्। ईशानकोणे।

**उत्तरपूर्व्वा** स्त्री० उत्तरस्याः पूर्व्वस्या दिशोऽन्तराला दिक्। ईशानकोणे

**उत्तरभाद्रपद** स्त्री० भद्राय हितः भाद्रः तत् पादश्चतुर्थांशो यस्याः। अश्विन्यादिनक्षत्रेषु षड्विंशे नक्षत्रे।

**उत्तरापरा** स्त्री० उत्तरस्याः अपरस्यादिशोऽन्तरेखा। वायुकोणे उत्तरापराभिमुखोऽन्य–ष्टमदिशमानक्षत्रदर्शनात्।

**उत्तरायण** न० उत्तरा उत्तरस्यामयनं सूर्य्यादेः। सूर्य्यादेः उत्तरदिग्गमने। वर्षस्यार्द्धे सूर्य्यस्थ दक्षिणत उत्तरदिग्गमनसम्पादके। षण्मासात्मके काले। सूर्य्यदेः दक्षिणोत्तर–योरयनश्च। तथा च सूर्य्यस्योत्तरायणसंक्रमावधि षण्मासाः उत्तरायणकालः। कर्कटादिस्थिते भानौ दक्षिणायनमुच्यते। उत्तरायणमप्युक्तं मकरस्थे दिवाकरे।

**उत्तराशा** स्त्री कर्म्प०। उत्तरस्यां दिशि। उत्तराशाधीशादयः ।

**उत्तराषाढा** स्त्री  अश्विन्यादिनक्षत्रेषु एकविंशतितमे नक्षत्रे। ''उग्रः पूर्व्वमघान्त-काध्रुवगणस्त्रीण्युत्तराणि स्वमूः''।

**उदच्** स्त्री०  ऊर्द्धगते उत्तरे देशे। अनन्तरे काले। उत्तरदिग्देशकालवृत्तौ च। ''उदग्ध्रुवं पश्यति चोन्नतम्।''(सि शि०)

**उदधिमेखला** स्त्री०  उदधिर्मेखलेव यस्याः। मध्यस्थाने समुद्रवेष्टितायां पृथिव्याम्। भूगोले ''भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः।'' सिद्धान्तशिरोमणौ उक्तेः याम्यार्द्धे एवाम्बुधीनां निवेशात् तेषां पृथिवी मध्यवेष्टकतया मेखलातुल्यत्वम्।

**उदय** पु०  ज्योतिषोक्ते राशेरुदयरूपे लग्ने। ग्रहाणामुदयश्च स्वाधिष्ठितराशीनामुदयात्। ''निजनिजोदयलग्नसमुद्गमे समुदयोऽपि भवेद्धनभःसदाम्।''(सि शि०) राशीनां देशभेदेनोदयकालविशेषः। तत्रादौ निरक्षदेशलङ्कादौ तन्मानसाधनं यथा ''एकस्य राशेर्बृहती ज्यका या द्वयोस्त्रिभस्यापि कृतीकृतानाम्। स्वस्वापमज्याकृतिवर्जितानां मूलानि तासां त्रिगुणा ३४३८ हतानि। स्वस्वद्युमौर्व्या विभजेत् फलानां चापान्यधोऽधः परिशोधितानि। क्रमोत्क्रमस्थानि निरक्षदेशे मेषादिकानामुदयासवः स्युः।''

**उदयगामिनी** स्त्री०  उदयं सूर्य्योदयं गच्छति मुहूर्त्तादिना व्याप्नोति।

**उदयगिरि** पु०  उदयस्थानं गिरिरिव। सूर्य्यादिरुदयस्थाने पर्वतदाच्छादके भूवृत्तपादे। भूगोलपादस्यैव यथा सूर्य्याद्याच्छादकत्वम् तथा सिद्धान्तग्रन्थे स्थितम्। यद्यपि सुर्य्योदयस्य देशविशेषे विशेषस्थाने एव सम्भवः, तथापि निरक्षदेशावधिकएव देशे मुख्यत्वम्। ''लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनार्धं यमकोटिपुर्याम्। अधस्तदा सिद्धपुरेऽस्तकालः स्याद्रोमके रात्रिदलं तदैव। यत्रोदितोऽर्कः किल तत्र पूर्वा तत्रपरा यत्र गतः प्रतिष्ठाम् तन्मत्स्यतोऽन्ये च ततोऽखिलानामुदक्स्थितोमेरुरिति प्रसिद्धम्।''(सि शि०)

**उदयान्तर** न०  उदयस्योदयज्ञानार्थम् अन्तरं यत्र। सिद्धान्तशिरोमणौ उक्ते ग्रहाणामुदयज्ञानर्थं संस्कारभेदे।

**उदयास्तसूत्र** न० ''क्ष्माजे द्युरात्रसममण्डलमध्यभागजीवाग्रका भवति पूर्वपराशयोः सा। अग्राग्रयोः प्रगुणमत्र निबद्धसूत्रं यत्तद्वदन्ति गणका उदयास्तसूत्रम्।''(सि शि०) सिद्धान्तशिरोमणौ उक्ते क्षितिस्वाहोरात्रवृत्तसम्पातयोर्बद्धे सूत्रे।

**उद्देशक** पु० उपदेशके,उदाहरणवाक्ये च। ''अत्रोद्देशक'' इति लीलावत्यां भूरिप्रयोगः। प्रच्छके ''उद्देशकालापवदिष्टराशिः।''(लीला०)

**उन्नत** त्रि० उच्चे। सिद्धान्तशिरोमणौ उक्ते दिनमानज्ञानसाधने। ''उक्ता प्रभाभिमतदिङ्नियमेन तावत् तामेव कालनियमेन च वच्मि भूयः। स्यादुन्नतं द्युगतशेषकयोर्यदल्पं तेनोनितं दिनदलं नतसंज्ञकं च। अथोन्नतादूनयुताच्चरेण क्रमादुदग्दक्षिणगोलयोर्ज्या। स्यात् सूत्रमेतद्गुणितं द्युमौर्व्याव्यासार्धभक्तं च कलाभिधानम्।'' दिवसस्य यद्गतं यच्च शेषं तयोर्यदल्पं तदुन्नतसंज्ञ ज्ञेयम्। तेनोन्नतेनो-नीकृतं दिनदलप्रमाणं तन्नतसंज्ञं भवति। अथोन्नतादुन्नतकालादुत्तरगोले च तेनौनिता दक्षिणे युताद्या ज्या तत्सूत्रम्। सा सूत्रसंज्ञेत्यर्थः। तत् सूत्रं द्युज्यया गुणितं त्रिज्यया भक्तं कलासंज्ञं भवति। अत्रोपपत्तिः। यस्मिन् काले छाया साध्या तस्मिन् काले स्वाहोरात्रवृत्ते यावतीभिर्घटिकाभिः क्षितिजादुन्नतो रविस्तासामुन्नतसंज्ञा। येन कालेन मध्याह्नान्नतस्तस्य नतसंज्ञा। अथ चरेणोनयुतस्योन्नतकालस्य किल ज्या साध्या। सा च ज्या मध्यावधिर्भवति। स च मध्यप्रदेशोऽहोरात्रवृत्तस्योन्मण्डलसंपाते भवति। यत उन्मण्डलसम्पाताभ्यामूर्ध्वमहोरात्रवृत्तस्यार्धमधोऽर्धम्। अत उन्मण्डलावधेर्जीवा साध्या। क्षितिजोन्मण्डलयोरन्तरं चरार्धम्। अतश्चरार्धेन वर्जितादुन्नतादुत्तरगोले, दक्षिणे तु युतात्। यत उत्तरगोले क्षितिजादुपर्युन्मण्डलं, दक्षिणेऽधः। तस्मात् कलाद्या ज्या साधिता सा त्रिज्यावृत्तपरिणता। सा च सूत्रसंज्ञा। अथ यदि त्रिज्यावृत्त एतावती तदा द्युज्यावृत्ते कियतीत्यनुपातेन द्युज्यावृत्तपरिणता। सा च कलासंज्ञा प्रमि०। सिद्धान्तशिरोमणौ उक्ते ग्रहाणामक्षलम्बज्ञानार्थे उपायभेदे च। ''यन्त्रवेध-विधिना ध्रुवोन्नतिर्या नतिश्च भवतोऽक्षलम्बकौ। तौ क्रमाद्विषुवदह्याहर्दले येऽथ वा नतसमुन्नता लवाः।'' चक्रयन्त्रेण ग्रहवेधवद्ध्रुवं विध्येत्। तत्र यन्त्रनेभ्यां य उन्नताशा-

स्तेऽक्षांशाः। ये नतास्ते लम्बांशाः। अथ वा विधुवद्दिनार्द्धे येऽर्कस्य नतोन्नतांशा– स्तेऽक्षलम्बांशा इति युक्तियुक्तम्। ''उन्नतं द्युनिशमण्डले कुजात् सावनं द्युतिविधौ हि तज्ज्यका। तिर्य्यगक्षवशतोऽक्षकर्णवच्छेदको न तु नरः स लम्बवत्।'' दृङ्मण्डले क्षितिजादुपरिग्रहपर्य्यन्तं येऽंशास्त उन्नताः स्वमध्यादधस्ते नताः। उन्नतांशानां ज्या शङ्कुः। नतांशज्या दृग्ज्या शङ्कुः कच्छन्नलिप्राभिरूनः कार्य्यः। द्रष्टः कुदलेनो– च्छ्रितत्वात्। अयमर्थो ग्रहच्छायाधिकारे व्याख्यात एव।

''उदग्देशं याति यथा यथा नरस्तथा तथा स्यान्नतमृक्षमण्डलम्। उदग्दिशं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः।''(सि शि०)

**उन्नतकाल** पु० सिद्धान्तशिरोमणौ उक्ते छायातः कालज्ञानसाधने प्रक्रियाभेदे। ''पलश्रुतिघ्नस्त्रिगुणस्य वर्गोद्युज्येष्टकर्णाहतिहृद्भवेद्वा। इष्टान्त्यका तद्रहितान्त्यका या भवन्ति या उत्क्रमचापलिप्ताः। नतासवस्ते स्युरहर्दलं तैरूनीकृतं चोन्नतकाल एवम्।'' ''त्रिज्यावर्गः पलकर्णेन गुण्यः, द्युज्यया इष्टकर्णस्य च घातेन भाज्यः, यत्फलं लभ्यते सेष्टान्त्यका। तयेष्टान्त्यया रहितया अन्त्याया यच्छेषं तस्योत्क्रमेण धनुः कार्य्यं तस्य धनुषोयावत्यः कलास्तावन्तस्तस्मिन् कालेन नतासवोज्ञेयाः तैर्नतासुभिरुनीकृतादिनदलासव उन्नतासवः स्युः। प्रकारान्तरेण त्रैराशिकत्रयेणोपपत्तिः। यदीष्टच्छायाकर्णेन द्वादशाङ्गुलशङ्कुर्लभ्यते तदा त्रिज्याकर्णेन क इति। अत्र त्रिज्याया द्वादश गुण इष्टकर्णो हरः। फलं महाशङ्कुः। अथ तस्य हृतिकरणार्थमनुपातः। यदि द्वादशाङ्गुलशङ्कोर्विषुवत्कर्णः कर्णस्तदास्य महाशङ्कोः क इति। पूर्वं त्रिज्याया द्वादश गुण इदानीं हरः। अतस्तुल्यत्वाद्द्वादशाङ्कयोर्गुणहरयोर्नाशे कृते सति त्रिज्यायाः पलकर्णो गुण इष्टच्छायाकर्णो हरः फलमिष्टहृतिः। अथेष्टान्त्याकरणायानुपातः। यदि द्युज्यया त्रिज्या लभ्यते तदिष्टहृत्या किमिति। इदानीं त्रिज्या गुणो द्युज्या हरः। हरयार्घातो त्रिज्यावर्गः पलकर्णगुणितो भवति। एवं फलमिष्टान्त्यका। तया वर्जिताया अन्त्याया यदवशेषं सा नतस्योत्क्रमज्या शरसंज्ञा। अतस्तस्या धनुरुत्क्रमेण स नतकालः स्यात्। नतकालो दिनार्धात् पतित उन्नतकालः स्यादित्युपपन्नम्''।

**उन्नतानत** न० उन्नतं च तदानतश्च। उच्चनीचस्थानादौ। ''बन्धुरं तून्नतानतम्''अमरः।

**उन्नति** स्त्री० वृद्धौ,उदये। चन्द्रशृङ्गोन्नतिः उक्ता यथा ''मासान्तपादे प्रथमेऽथ वेन्दोः शृङ्गोन्नतिर्यद्दिवसेऽवगम्या। तदोदयेऽस्ते निशि वा प्रसाध्यः शङ्कुर्विधोः स्वोदितनाडिकाद्यैः।''(सू सि०) कृणाष्टम्या उपरि प्रथमेऽथ वा शुक्लाष्टम्याः प्रागेव यस्मिन्नभीष्टदिने शशिशृङ्गोन्नतिर्ज्ञातुमभीष्टा तस्मिन् दिने मासान्तपाद औदयिकौ चन्द्रार्कौ स्पष्टौ कार्यौ। प्रथमचरणे त्वस्तकालिकौ ततः शृङ्गोन्नतिर्ज्ञेया। निशि वा। एतदुक्तं भवति। मासान्तपाद उदयकाले शशिशृङ्गोन्नतिः साध्या। प्रथमा चरणे त्वस्तकाले। अथवा किमुदयास्तनियमेन। यत्रोदये तत्रोदयात् प्रागिष्टघटीतुल्यकाले वा यत्रास्ते तत्रास्तादुपरोष्टासु घटीषु वा शृङ्गोन्नतिः साध्या। तत्र तात्कालिकौ चन्द्रार्कौ कृत्वा चन्द्रस्य स्फुटक्रान्त्युदयास्तलग्नोन्नतघटिकादिभिस्तदुपकरणैः शङ्कुः साध्यः। अत्रोपपत्तिः। चन्द्रस्यार्द्धादूने शुक्ले तत्कोटी शृङ्गाकारे भवतः। तत्रेष्टकाले कतरा शृङ्गोन्नतिर्भविष्यतीति ज्ञातव्यम्। तत्र शुक्लस्य शृङ्गाकारतार्धादूने शुक्रे। तच्चार्धादूनत्वं मासान्तपादे प्रथमे च संभवति। द्वितीयतृतीययोरपि चरणयो-र्ब्रह्मगुप्तादिभिः कृष्णाशृङ्गोन्नतिरानीता सा मम न सम्प्रता। नहि नरैः कृष्णशृङ्गोन्नतिः स्पष्टोपक्ष्यते। प्रसिद्धा तु शुक्लशृङ्गोन्नतिः। अत उक्तं मासान्तपादे प्रथमेऽव वेति।

**उन्मण्डल** न० उल्लग्नं मण्डलम्। सिद्धान्तशिरोमणौ उक्ते दिन रात्र्योः क्षयवृद्धिसाधने मण्डलभेदे। यथाह तत्रैव – ''पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चाक्षलवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि।'' समवृत्तक्षितिजयोर्यौ पूर्व्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च सक्तं यन्निबध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवतः। सूर्य्यसिद्धान्ते रङ्गनाथेन च स्पष्टमुक्तं यथा – ''प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डले। उन्मण्डले च विषुवन्मण्डले परिकीर्त्यते।''(सू सि०) प्राक्पश्चिमाश्रिता पूर्व्व पश्चिमसम्बद्धा साधिता रेखा समवृत्तमुच्यते। सैव रेखोन्मण्डलं विषुवन्मण्डलम्। अत्रोपपत्तिः। क्षितिजपूर्वापरवृत्तसंयोगौ पूर्वापरे तत्सूत्रं पूर्वापरसूत्रमिति। पूर्वापरवृत्तस्य

भूमावूर्ध्वाधरातुकारिवृत्तत्वेनादर्शनाष्ट्रे स्वाकारतयैव दर्शनाच्च पूर्वापरवृत्तमपि तत्सूत्रम्। पूर्वापरवृत्तस्य सममण्डलत्वेनाभिधानात् तद्रेखा सममण्डलसञ्ज्ञोक्ता। अथ स्वनिरक्षदेशक्षितिजवृत्तस्योन्मण्डलाख्यस्य तत्संयोगयोः संलग्नत्वात् तन्मध्यसूत्रत्वेन पूर्वापरसूत्रस्यापि सत्त्वात् पूर्वापरसूत्रमुन्मण्डलसञ्ज्ञम्। एतेनान्यदेशक्षितिजसञ्ज्ञया स्वदेशक्षितिजसञ्ज्ञा सुतरां सिद्धेति पूर्वापरसूत्रस्य क्षितिजवृत्तसञ्ज्ञा द्योतिता। पूर्वापरस्थानयोः क्षितिजवृत्तस्य संलग्नत्वादुल्लिखितवृत्तस्य क्षितिजानुकारित्वाच्च रङ्ग०। उद्वृत्तादयोऽप्यत्र। ''परोऽथ वोद्वृत्तगते रवौ श्रुतिः'' । ऊर्ध्वमण्डले त्रि०।

**उन्मण्डलकर्ण** पु० सिद्धान्तशिरोमणौ उक्ते छायया दिनज्ञानार्थे उन्मण्डलस्थार्कस्य छायाकर्णे। तदानयनं तत्रैव यथा– ''युतायनांशार्कबृहद्भुजज्यया खरामतिथ्यभ्रभुवो (१०१५३०) हृताः परः। पलश्रुतिघ्नः पलभाविभाजितः परोऽथवोद्वृत्तगते रवौ श्रुतिः।'' अर्कस्य सायनांशस्य बृहती भुजज्य साध्या। न लघुखण्डज्येत्यर्थः। तया ज्यया पूर्णाग्नितितिशून्यश्चशिनो (१०१५३०) भाज्याः। यल्लब्धमासौ पराख्यः। स परः पलकर्णेन गुण्यः पलभया भाज्यः। फलमुन्मण्डलगतस्यार्कस्य छायाकर्णो वा भवति।

**उन्मण्डलन** पु० सिद्धान्तशिरोमणौ उक्ते अक्षक्षेत्रप्रदर्शनार्थे उन्मण्डलशङ्कौ। ''अग्रादिखण्डं कथिता च कोटिरुद्धृत्तना दोः श्रवणोऽपमज्या। उद्वृत्तना कोटिरथा–ग्रकाग्रखण्डं भुजस्तच्छ्रवणः क्षितिज्या। खण्डं यदूर्ध्वं समवृत्तशङ्कोर्यत् तद्धृतेस्तावथ कोटिकर्णौ। अग्रादिखण्डं भुज एवमष्टौ क्षेत्राण्यमून्यक्षभवानि तावत्।''अत्र किल निरक्षदेशं यदेव विषुवन्मण्डल तदेव सममण्डलम्। तथा क्षितिजादन्यदुन्मण्डलं नाम वलयं नास्ति। तत्र ध्रुवौ च क्षितिजासक्तौ। अथ निरक्षदेशादुद्रष्टा यथा यथोत्तरतो गच्छति तथा तथोदग्ध्रुवमुन्नतं पश्यति। तथा यैर्भागैर्ध्रुवोन्नस्तैरेव भागैरक्षसंज्ञैः स्वस्वस्तिकाद्दक्षिणतो विषुवन्मण्डलं नतं पश्यति। विषुवन्मण्डलस्य तिर्यक्स्थितत्वात् तदाश्रिततान्यहोरात्रवृत्तानि स्वस्थाने तिरश्चीनानि भवन्ति। अतः साक्षे देशे खगोलवलयानां तिरश्चीनखगोलवलयानां च संपातात् त्र्यशाणिक्षेत्राण्युत्पद्यन्ते।

तान्यक्षक्षेत्रसंज्ञान्युपयोगित्वात् कथ्यन्ते। अक्षभा नाम पलमा प्रसिद्धा सा भुजः। द्वादशाङ्गुलः शङ्कुः कोटिः। अक्षकर्णस्तत्र कर्णः'' प्रमि० उद्वृत्तनाप्यत्र। एवमुन्मण्डला- दिशङ्कुरप्यत्र।

**उन्मीलन** न० विकाशे। चक्षुरादेः पुटविभेदे। ''सम्मीलनोन्मीलनके तथैव।''(सि शि०) उन्मीलोऽप्यत्रः पु०।

**उपनक्षत्र** न० उपगतं नक्षत्रम्। अश्विन्यादिसप्तविंशतिनक्षत्राणां प्रत्येकं सप्तविंशत्यानुशतेषु ७२९ संख्या तेषु राशिचक्रस्थेषु तारकाभेदेषु। तानि वा एतानि सप्तविंशतिः, नक्षत्राणि सप्तविंशतिः, सप्तविंशतिर्होप नक्षत्राण्येकैकं नक्षत्रमनूपतिष्टन्ते तानि च सप्तशतानि विंशतिश्चाधि।

**उपरक्त** पु० राहुग्रस्ते चन्द्रे सूर्य्ये च।

**उपराग** पु० समीपस्थित्या। रविचन्द्रयोर्ग्रहणे। तत्रापि छादकसान्निध्यात् चन्द्रार्कयोस्त- द्रूपारोप एवेति तस्य तथात्वम्। ग्रहणञ्च राह्वधिष्ठितभूमिच्छायया चन्द्रस्य, तधिष्ठितचन्द्रमण्डलेन च रवेर्मण्डलस्य च्छादनमिति सिद्धान्ते स्थितम्। ग्रहणं कथमिति निरूपितम् यथा – ''पश्चाद्भागाज्जलदवदधः संस्थितोऽभ्येत्य चन्द्रो भानोर्बिम्बं स्फुरदसितया छादयत्यात्ममूर्त्या। पश्चात् स्पर्शो हरिदिशि ततो मुक्तिरस्यात एव क्वापिच्छन्नः क्वचिदपिहितो नैव कक्षान्तरत्वात्।''(सि शि०) अर्कादधश्चन्द्रकक्षा। यथा मेघोऽथस्थः पश्चाद्भागादागत्य रविं छादयति एवं चन्द्रोऽपि शीघ्रत्वात् पश्चाद्भागादागत्य रविं छादयति। ततः पश्चात् स्पर्शः। निःसरति चन्द्रे पूर्व्वतो मोक्षो रवेः। अत एव कक्षाभेदात् क्वचिदर्कश्छिन्नो दृश्यते क्वचिदेव न छन्नः। यथाधःस्थे मेघे कैश्चिद्रविर्नदृश्यते कैश्चिद्दृश्यते प्रदेशान्तरस्थैः।

**उपसूर्यक** न० उपगतं सूर्यं चन्द्रं वा संज्ञायां। चन्द्रार्कसमीपे मण्डलाकारे परिधौ।

**उषा** स्त्री० ओषत्यन्धकारम्,प्रातरादिसन्ध्यासु,काले,नक्षत्रप्रभाक्षयकालः। पञ्चपञ्चाशद्घटिकोत्तरमारभ्य सूर्यार्द्धोदयपर्य्यन्तः कालः।

**उष्ण** पु० ग्रीष्मऋतौ,आतपे।

**उष्णकर** च० उष्णः करः किरणोऽस्य। सूर्य्ये। उष्णकिरणोष्णादीधिति प्रभृतयोऽप्यत्र। उष्णं करोति। उष्णकारके त्रि०।

**उष्णकाल** पु० ग्रीष्मे ऋतौ।

**उष्णगु** पु० उष्णागावः कराः अस्य। सूर्य्ये। उष्णारश्म्यादथोऽप्यत्र।

**उष्णांशु** पु० उष्णाः अंशयो यस्य। सूर्य्ये।

**ऋक्ष** पु० स्त्री० न० नक्षत्रे। ''अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशीर्षस्तथा चार्द्रा पुनर्वसुकपुष्यकौ। आश्लेषा च मघा पूर्वफल्गुन्युत्तरफल्गुनो। हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका। ज्येष्ठा मूलं तथाषाढे पूर्वोत्तरपदादिके। श्रवणा च धनिष्ठा च शतभिषगाद्यभाद्रिका। उत्तरादिभाद्रपदा रेवती भानि च क्रमात्''

**ऋक्षचक्र** न० नक्षत्रसमुदाये। ऋक्षाणां चक्रमिव गगनस्थे नक्षत्रात्मके चक्राकारे पदार्थभेदे। भचक्रस्य प्रवहवायुना प्रत्यहं पश्चाद्गगनेऽपि ग्रहाणां यथा प्राग्गतित्वं भवेत्तथा सूर्यसिद्धान्त रङ्गनाथव्याख्ययोः यथा अथ ग्रहपूर्व्वगत्युत्पत्तौ कारणमाह। ''पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः। जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः।'' पश्चादनन्तरं पुनरावृत्त्या पश्चात् पश्चिमदिगभिमुखं नक्षत्रैस्तारकादिभिः सह ग्रहाः सूर्यादयोऽतिजवात् प्रवहवायुसत्वरगतिवशात् सततं निरन्तरं व्रजन्तो गच्छन्तः स्वमार्गगाः स्वकक्षावृत्तस्था जीयमाना नक्षत्रैः पराजिता नक्षत्राणामग्रे गमनात्।

**ऋक्षराज** पु० नक्षत्रेशे। चन्द्रे।

**ऋज्वी** स्त्री० सूर्यसिद्धान्ते उक्ते ग्रहाणां गतिभेदे। ''वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा। तथा शीघ्रा शीघ्रतरा ग्रहाणामष्टधा गतिः। तत्रातिशीघ्रा शीघ्राख्या मन्दा मन्दतरा समा। ऋज्वीति पञ्चधा ज्ञेया या वक्रा सानुवक्रगा।'' तत्राष्टविधगतिषु

अतिशीघ्रेत्यादिः समेत्यन्ता इत्येवं पञ्चधा गतिः ऋज्वीमार्गो गतिर्ज्ञेया या गतिः सानुवक्रगा।

**ऋतु** पु० कालभेदे। ''शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः। माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादिमे''।

**ऋतुबल** पु० ऋतौ ऋतुभेदे बलं यस्य। शिशिरादिषु बलयुक्तरव्यादिग्रहेषु ते च यथा। ''शनिशुक्रकुजेन्दुज्ञगुरवः शिशिरादिषु। भवन्ति कालबलिनो ग्रीष्म सूर्यस्तथैव च'' ज्यो०।

**ऋतुसन्धि** पु० ऋत्वोः सन्धिः। दर्शान्तमुख्यचान्द्रमासपक्षे,दर्शे, पौर्णमासा-न्तगौणचान्द्रमासपक्षे,पौर्णमास्याम्। ऋतोर्मासघटितत्वात् माासस्य च पर्व्वसन्धियुक्तत्वे पर्वसन्धिरेवं ऋतुसन्धिः।

**एकोत्तर** त्रि० एकैकमुत्तरं यत्र वृत्तौ सप्तच्छदवत् संख्याशब्दस्य वीस्पार्थता। एकैकाधिके। ''एकाद्येकोत्तरा अङ्का व्यस्ताभाज्याः क्रमस्थितैः।''(लीला०)

**एणभृत्** पु० एणं बिभर्त्ति। चन्द्रे तस्य मृगाङ्कत्त्वात् तथात्वम्।

**ऐन्दव** न० इन्दुर्देवताऽस्य। मृगशिरोनक्षत्रे। चान्द्रे मासे पु०। ''ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते।''(सू सि०) चन्द्रसम्बन्धिनि।

**ऐन्द्र** न० इन्द्रोदेवताऽस्य। इन्द्रदेवताके । तद्देवताके ज्येष्ठानक्षत्रे। ''ज्यैष्ठे मूले च नक्षत्रे चरेद्यदि बृहस्पतिः। ऐन्द्रः संवत्सरः स स्यात् सर्वभूताशिवप्रदः'' विष्णु ध० उक्ते द्वादशवर्षमध्ये संवत्सरभेदे।

**ओज** पु० ''ओजोऽथ युग्मं विषमः समश्च''। ज्योतिषोक्ते मेषादीनां द्वादशानां मध्ये अयुग्मे विषमे राशौ यथा १,३,५,७,९,११, अङ्कैर्बोधिता मेषमिथुन-सिंहतुलाधनुः कुम्भा ओजराशयः।

# द्वितीयोऽध्यायः

## 'क' वर्गः

**कदम्ब** पु० कदम्बवृक्षश्च मेरुविष्कम्भपर्वतरूपमन्दरस्य विशेषचिह्नवृक्षः। ''विष्कम्भशैलाः खलु मन्दरोऽस्य सुगन्धशैलो विपुलः सुपार्श्वः। तेषु क्रमात् सन्ति च केतुवृक्षाः कदम्बजम्बूवटपिप्पलकाख्याः।''(सि शि०)

**कदम्बभ्रमवृत्त** न० कदम्बवत् भ्रमस्य वृत्तं गोलक्षेत्रम्। सिद्धान्तशिरोमणौ उक्ते गोलवृत्तभेदे। तद्बन्धप्रकारस्तत्रैव ''तत्रापसण्डलप्राच्या याम्या सौम्या च दिक् सदा। कदम्बभ्रमवृत्तं च बध्नीयात् परितो ध्रुवात्। गोले तु जिनतुल्यांशैस्तत्र ज्या क्रान्तिशिञ्जिनी। सर्व्वतः समवृत्ताच्च याम्योदक् कुजसंगमे। तत्तिर्य्यग्गतसूत्राणां योगः स समसंज्ञकः। समध्रुवः कदम्बानामुपरि द्युचरान्नयेत्। सूत्राणि वृत्तरूपाणि वलनानि तदन्तरे। अक्षजं वलनं मध्ये स्यात् समध्रुवसूत्रयोः। कदम्बध्रुवसूत्रान्तरायनं च त्रिभे ग्रहात्। कदम्बसमसूत्रान्तः स्फुटं सर्वदिशां च तत्।''(सि शि०)

**कपिलद्युति** पु० कपिला द्युतिरस्य। सूर्य्ये। कपिलायां द्युतौ स्त्री।

**कबन्ध** पु० कं जलं बध्नाति। धूमकेतौ। प्रवहवायुना निचीयमानत्वात्तस्य तथात्वम्। राहौ, तस्य च्छिन्नमस्तकत्वेऽपि अमृतपानात् जीवनसत्त्वेन क्रियावत्त्वात् तथात्वम्।

**करकच** पु० ''शनिभार्गवजीवज्ञकुजसोमार्कवासरे। षष्ठ्यादितिथयः सप्त क्रमात् करकचः स्मृताः।'' तथा च शनौ षष्ठी, शुक्रे सप्तमी, गुरौ अष्टमी, बुधे नवमी, कुजे दशमी, सोमे एकादशी, रवौ द्वादशी तिथिः करकच इत्यर्थः।

**करण** न० क्रियतेऽनेन। ज्योतिषोक्तेषु तिथ्यर्द्धात्मकेषु बवादिषु। तेषामानयनप्रकारः सूर्य्यसिद्धान्त रङ्गनाथाभ्याम् उक्तो यथा– ''ध्रुवाणि शकुनिर्नागं तृतीयं तु चतुष्पदम्। किंस्तुघ्नं तु चतुर्दश्याः कृष्णायाश्चापरार्धतः।''(सू सि०)कृष्णपक्षीयायाश्चतुर्दश्या– स्तियेर्द्वितीयाधादिद्वतीयार्धमारभ्येत्यर्थः। चकार एवार्थे। तेनान्यतिथेरेतत्तिथिपूर्वार्धस्य च निरासः। ध्रुवाणि स्थिराणि करणानि। तान्याह। शकुनिरिति। चतुरष्पदं तृतीयमित्यनेन शकुनिनागयोः क्रमेणाद्यद्वितीयत्वं सूचितम्। तुकारात् क्रमेण तिथ्यर्धेषु भवन्ति।

किस्तुघ्नं चतुर्थम्। तुरन्तावधिद्योतकः तेनोक्तातिरिकं स्थिरकरणं नास्तीति सूचितम्। अथ चरकरणान्याह। ''बवादीनि ततः सप्तचराख्यकरणानि च। मासेऽष्टकृत्व एकैकं करणानां प्रवर्तते।'' ततः स्थिरकरणपूर्त्यनन्तरं बवादीनि चरसञ्ज्ञककरणानि सप्तभद्राख्यानि शुक्लप्रतिपदिद्वतीयार्धतश्चतुर्थ्यन्तं भवन्तीति चार्थः। ननु पञ्चम्यादितः कानि करणानि भवन्तीत्यत आह मास इति। चरकरणानां बवादीनां सप्तानां मध्य एकैकमेक्मेकं करणं मासे स्थिरकरणकालोनितत्रिंशत्तिथ्यात्मकमासे स्वल्पान्तर–त्वान्मासग्रहणम्। अष्टकृत्वोऽष्टवारः प्रवर्तते प्रकर्षेण तिष्ठति भवतीत्यर्थः। तथा च पञ्चम्याद्यर्घदितानि पुनःपुनः परिभ्रमन्ति। कृष्णचतुर्दश्याद्यार्धपर्यन्तमिति भावः। ननु स्थिरकरणोक्तावपरार्धत इत्युक्त्या तेषां चतुर्णां तिथ्यर्धभोगेन शुक्लप्रतिपदाद्यर्धपर्यन्तं क्रमेणावस्थानं युक्तं चरकरणानां तु केवलोह्या तदनन्तरं कृष्णाचतुर्दश्याद्यार्धपर्यन्तमेक एव परिभ्रमोऽरित्वत्यतस्तदुत्तरं कथयन्नन्यदप्याह''। ''तिथ्यर्द्धभोगं सर्वेषां करणानां प्रकल्पयेत्। एषा स्फुटगतिः प्रोक्ता सूर्यादीनां खचारिणाम्।'' सप्तानां चरकरणानां प्रत्येकं तिथ्यर्द्धश्चासौ भोगश्च तं तिथ्यर्धकालमितावस्थानं प्रकल्पयेत्। एकत्र निर्णीतः शास्त्रार्थोऽपरत्र भवतीति न्यायात् करणत्वेनैषामप्यवस्थानं तत्तुल्यं कुर्यादित्यर्थः। अत एव तिथ्यर्धं करणं स्मृतम् इत्युक्त्या चान्द्रमासे त्रिंशत्तिथ्यात्मके षष्टिकरणानां सन्निवेशाच्चरकरणानामेव परिभ्रमणे प्रतिमाससमनियततिथिभोगकं करणं भवतीति तद्वारकप्रतिमासनियततिथिभोगककरणक्सिद्ध्यर्थं चरकरणानाम् अष्टवारपरिभ्रमणोत्तरम् अवशिष्टतिथ्योश्चतुर्ष्वर्धेषु स्थिरकरणान्युक्तानीति तात्पर्यम्। तत्रापि कृष्णचतुर्दश्यपरार्धतः तत्कल्पनं तदिच्छानियामकं स्वतन्त्रेच्छस्य नियोगानर्हत्वात्।''करणानि च बवबालवकौलवतैतिलगरवणिग्विष्टिभद्राख्यानि सप्त–चरकणानि। स्थिरकरणानि शकुन्यादीनि इति दशसंख्यानि।

**करिन्** पु० स्त्री० करः शुण्डः प्राशस्त्ये नास्त्यस्य।''अरिकरिहरणार्थं योजनानाम् अशीत्या।''(लीला०)

**कर्कि** पु० कर्कटराशौ। ''कर्किमीनधनुर्भ्याश्च हरिः कीटघटेन च'' ज्यो० त०।

**कर्ण** पु० कर्ण्यते आकर्ण्यतेऽनेन कर्ण। गोलके च। त्रिकोणादिक्षेत्रे भुजकोटिसंयोजक रेखाभेदे तद्रेखामानज्ञानोपायश्च लीलावती ग्रन्थे उक्तः यथा – ''इष्टो बाहुर्यः

स्यात्तत्स्पर्द्धिन्यां दिशीतरोबाहुः। त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः। तत्कृत्योर्योगपदं कर्णो, दोःकर्ण वर्गयोर्विवरात्। मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात् पदं बाहुः।''(लीला०) इति उदा० दिङ्मात्रमत्रोच्यते भुजः, कोटिः,अनयोर्वर्गः, तयोर्योगः, तस्य मूलम् तथाच चतुर्हस्तबाहुके त्रिहस्तकोटिके क्षेत्रे कर्णमानम् पञ्चहस्ताः। अस्य च भुजकोटिभेदनात् कृतिद्वारा तयोर्वर्गव्यापनाच्च कर्णत्वम्।

**कर्ष** पुंन० ''दशार्द्धगुञ्ज प्रवदन्ति माषम्। माषाह्वयैः षोडशभिश्च कर्षम्।''(लीला०) उक्ते अशीतिरत्तिकापरिमाणे षोड़शमाषके मानभेदे। तन्मिते सुवर्णे च।

**कल** न० गतौ संख्यायाञ्च। ''यदि व्यक्ते युक्तिव्यवकलनमार्गेऽसि कुशला।'' (लीला०) अथ संङ्कलनव्यकलनयोः करणसूत्रम्। ''सैकपदघ्नपदार्धमथैकाद्य-ङ्कयुतिः किल सङ्कलिताख्या।''

**कलन** न० कलयत्यनेन। गत्यर्थस्य ज्ञानार्थत्वात्। ज्ञाने च। ''लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः। सद्विधा स्थूलसूक्ष्मत्वात् मूर्तश्चामूर्त उच्यते।'' (सू सि०) कलनात्मकः ज्ञानविषयस्वरूपः। ज्ञातुम् इत्यर्थः। ज्ञानमात्रस्य कालविषयकत्वात् तथात्वम्।

**कला** स्त्री० कलयति कलते वा। कल्यते ज्ञायते कर्मणि। चन्द्रमण्डलस्य षोडशे भागे यथा च – चन्द्रस्य षोडशभागस्य कलाशब्दवाच्यत्वम्। तथा कालमाने उक्तं यथा स्कान्दे –''अमा षोडशभागेन देवि प्रोक्ता महाकला। संस्थिता परमा माया देहिनां देहधारिणी। अमादिपौर्णमास्यन्ता या एव शशिनः कलाः। तिथयस्ताः समाख्याताः षोडशैव वरानने। इति अयमर्थः या महामाया आधारशक्तिरूपा देहिनां देहधारिणी संस्थिता सा चन्द्रमण्डलस्य षोडशभागेन परिमिता। चन्द्रदेहधारिण्यमानाम्नी महाकलेति प्रोक्ता क्षयोदयरहिता नित्या तिथिसंज्ञिकैव इतरा अपि पञ्चदश कला दिवसव्यवहारोपयोगिन्यः क्षयोदयवत्यः, पञ्चदश तिथयो भवन्तीति तिथयः षोडशैवेत्यविरुद्धं वचनमिति। श्रुतिस्त्वलस्मिन्नर्थे पक्षनिर्णय एवोदाहृता। ''तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोड़शी कलेति''। एवञ्च सत्यत्र सामान्यविशेषरूपेण तिथिद्वैविध्यमुक्तं भवति। तत्र येयममेत्युक्ता क्षयोदयविवर्जिता ध्रुवा षोडशी कला। तद्युक्तः कालस्तिथिसामान्यं यास्त्ववशिष्टाः वृद्धिक्षयोपेताः पञ्चदश कलास्ता-

भिर्विशिष्टाः कालविभागासतिथिविशेषाः। तासां पञ्चदशानामेकैकां कलां बह्व्यादयः प्रजापत्यन्ताः पञ्चदश देवताः क्रमेण पिबन्ति। तत्र वह्निना या कला प्रथमं पीयते सा प्रथमेत्युच्यते, तया युक्तः कालविशेषः प्राथम्यवाचिना प्रतिपच्छब्देनाभिधीयते। एवं द्वितीयादीनां पञ्चदश्यन्तानां तिथीनां नामान्यवगन्तव्यानि, ता एताः कृष्णपक्षे तिथयो भवन्ति। पुनश्च ताः पीताः कलास्तेनैव क्रमेण तत्र तथा वह्न्यादिदेवताभ्यो निर्गत्य चन्द्रमण्डलं पूरयन्ति। ताभिर्युक्ताः कालविशेषाः शुक्लपक्षगताः प्रतिपदाद्यास्तिथयो भवन्ति। बह्व्यादिदेवतानां कलापानं सोमोत्पत्तौ पठितम्, तथा हि ''प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः। विश्वेदेवास्तृतीयान्तु चतुर्थी सलिलाधिपः। पञ्चमीं तु वषट्कारः षष्ठी पिबति वासवः। सप्तमीमृषयोदिव्या अष्टमीज एकपात्। नवमीं कृष्णपक्षेऽस्य यमः प्राश्नाति वै कलाम्। दशमीं पिबते वायुः पिबत्येकादशीमुमा। द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः। त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम्। चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः। निष्पीतः कल या शेषश्चन्द्रमा न प्रकाशते। कलाषोड़शिका या सा त्वपः प्रविशते सदा। अमायां तु सदा सोम औषधीः प्रतिपद्यते। तमोषधिगतं गावः पिबन्त्यम्बुगतञ्च यत्। तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः। हुतमग्निषु यज्ञेषु पुनराप्यायते शशी। दिने दिने कलावृद्धिः पोर्णमास्यां तु पूर्णतेति।

एवं षोडशानां कलानामेका नित्या अन्या क्षयोदयशालिनी। ''विकलानां कला वक्ष्या तत्वक्ष्या भानु उच्यते। तत्त्रिंशता भवेद्राशिर्भगणोद्वादशैव ते।'' (सू सि०) सिद्धान्तशिरोमणौ उक्ते दिनमानज्ञानोपयोगिनि दिनज्यागुणिते व्यासार्द्ध-भक्ते सूत्रात्मके पदार्थे च।

**कलाधर** पु० कलाः धरति। चन्द्रे। चतुःषष्टिकलाधारकमात्रे त्रि०।

**कलानिधि** क० कलानिधीयतेऽस्मिन्। चन्द्रे।

**कलाप** पु० कलां मात्रामाप्नोति। चन्द्रे।

**कलावत्** पु० कला अमृतादिकाः सन्त्यत्र। चन्द्रे।

**कलि** पु० चतुर्थे युगे। तन्मानमाह पुराणसर्व्वस्वे ब्रह्म पु०- ''दिव्यवर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम्। चतुर्युगं द्वादशभिस्तदुविभागं निभोध मे। चत्वारि त्रीणि द्वे चैकं

कृतादिषु यथाक्रमम्। दिव्यावदानां सहस्राणि युगेष्वाहुः पुराविदः। तत्प्रमाणैः शतैः सन्ध्या पूर्व्वा तत्राभिधीयते। सन्ध्यांशकश्च तत्तुल्योयुगस्यानन्तरोहि सः। सन्ध्या-सन्ध्यांशयोरन्तः कालोवै मुनिसत्तम। युगाख्यं तत् विज्ञेयं कृतत्रेतादिसंज्ञितम्। सूर्य्यसिद्धान्तेऽप्युक्तं यथा -''सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः। सन्ध्या-सन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्। कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया।''(सू सि०)

तेषां दिव्यवर्षाणां द्वादश सहस्राणि चतुर्युगम्। चतुर्णां युगानां कृत-त्रेताद्वापरकल्याख्यानां समाहारोयोगस्तदात्मकं महायुगमित्यर्थः। एतद्द्योतनार्थं चतुरित्युक्तिरन्यथा युगमित्युक्तौ तद्वैयर्थ्यापत्तेः। मानाभिज्ञैरुक्तम्। अथ सौरमानेन तत्संख्यां विशेषं चाह। सूर्याब्दसङ्ख्ययेति तद्देवासुरमानेनोक्तं चतुर्युगं द्वादशसहस्रवर्षात्मकं महायुगं सन्ध्यासन्ध्यांशसहितम्। युगचरणस्याद्यन्तयोः क्रमेण प्रत्येकं सन्ध्यासन्ध्यांशाभ्यां युक्तं सदेव सन्ध्यासन्ध्यांशावन्तर्गतौ न पृथक् यत्रैतादृशम्। सौरवर्षप्रमाणेन द्वित्रिसागरैः। अङ्कानां वामतो गतिः इत्यनेन द्वात्रिंशदधिकै-श्चतुःशतमितैः। अयुतेन दशसहस्रेण गुणितैः। खचतुष्कद्वात्रिंशच्चतुर्भिः ४३२०००० परिमितं ज्ञेयमित्यर्थः। कृतत्रेताद्वापरकलियुगानाम् धर्मपादव्यवस्थया धर्मचरणानां स्थित्या। इयं वक्ष्यमाणा व्यवस्था स्थितिर्ज्ञेया न तु समकालप्रमाणं स्थितिः। अयमर्थः - कृतयुगे चतुश्चरणो धर्म इति तस्य मानमधिकम्। ततस्त्रेतायां धर्मस्य त्रिपादवत्त्वात् तदनुरोधेन त्रेतामानं न्यूनम्। एवं द्वापरकल्योर्धर्मस्य क्रमेण द्व्येकचरणवत्त्वात् कृतत्रेतामानाभ्यां क्रमेणोक्तानुरोधान्न्यूनमानम्। न तु समं मानमिति। अथ सर्वधर्मचरणयोगेन दशमितेन यदि महायुगं भवति तर्हि स्वस्वधर्मचरणैः किमित्यनुपातेन पूर्वोक्तफलितेन कृतादियुगानां मानज्ञानं सविशेषणमाह। तेन ४३२००० वर्षास्तन्मानम्। युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः। क्रमात् कृतयुगादीनां षष्ठांशः सव्ययोः स्वकः। प्रागुक्तदिव्यवर्षद्वादशसहस्रमितस्य युगस्य दशमो भागो दशांश इत्यर्थः। चतुर्द्धा क्रमेण चतुस्त्रिद्वाकैर्गुणितः। गुणक्रमात् कृतयुगादीनां कृतत्रेताद्वापरकलियुगानां मानं स्यादिति शेषः। ननु मनुग्रन्थे कृतादिमानं दिव्यवर्षप्रमाणेन ४०००।३०००।२०००।१००० उक्तम्। अत्र तु तन्मानं तद्वर्षप्रमाणेन ४८००। ३६००। २४००।१२००। इति विरोध इत्यत आह। षष्ठ इति। स्वकः स्वसम्बन्धो

षष्ठो विभागः सन्ध्ययोराद्यन्तसन्ध्ययोरैक्यकाल इति शेषः, तथा च मदुक्तमानानि ४८००।३६००।२४००।१२००। एषां षडंशाः ८००।६००।४००। २००। एते स्वस्वयुगानामाद्यन्तयोः सन्ध्ययोर्योग इत्येषामर्घं सन्धिकालः। प्रत्येकमाद्यन्तयोः सन्धिकालः ४००।३००।२००।१००। अनेन प्रत्येकं मदुक्तमानं न्यूनीकृतं ग्रन्थान्तरोक्तं केवलं मानं भवति न स्वसन्धिभ्यां सहितम्। यथा कृतादिसन्धिः४००। कृतमानम् ४००० कृतान्तसन्धिः ४०००। योगे ४८०० त्रेतादिसन्धिः ३०० त्रेतामानं ३००० त्रेतान्तसन्धिः ३००। ३६०० द्वापरादिसन्धिः२०० द्वापरमानं २००० द्वापरान्तसन्धिः २००२४००। कल्यादिसन्धिः १०० कलिमानम् १००० कल्यन्तसन्धिः १००। १२००एवं च स्वसन्धिभ्यां सहितं मयोक्तं स्वसम्बन्धात् सन्ध्योस्तदन्तर्गतत्वाच्चेति न विरोध इति भावः रङ्ग०।

**कलियुग** न० कर्म० राहुशिरोवत् तत्पुरुषो वा। कलिरूपे युगे कालविशेषे तन्मानादिकं कलिशब्दे उक्तं तदारम्भतिथिर्युगाद्या सा गौडीयमते माघपौर्णमासी।

''अथ युगाद्याः तासु च युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता''। इत्यनेन व्यवस्था। ब्रह्मपुराणे। वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम्। कार्त्तिके शुक्लपक्षे तु त्रेताऽथ नवमेऽहनि। अथ भाद्रपदे कृष्णात्रयोदश्यान्तु द्वापरम्। माघे च पौर्णमास्यां वै घोरं कलियुगं स्मृतम्। युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः। अत्र वैशाखादयः पौर्णमास्यन्ता एव।

**कल्प** पु० कल्पयति सृष्टिं विनाशं वात्र। ब्रह्मणो रात्रिरूपे जगतां चेष्टासम्पादके च कालभेदे। ''यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्थपिति शान्तात्मा तदा सर्वं निमीलति।'' मनुना जगच्चेष्टातद्राहित्ययोर्ब्रह्माहोरात्रयोरुक्तेस्तथात्वम्।

कलिशब्दे दर्शितवाक्येन युगमानमुक्तां कल्पमानं प्रदर्श्य ब्रह्मणः आयुः परिमाणं तस्य गतायुः कालश्च सूर्यसिद्धान्ते उक्तो यथा -

''युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते। कृताब्दसङ्ख्यास्तस्यान्ते सन्धिः प्रोक्तो जलप्लवः।''(सू सि०) युगानां सैका सप्ततिरेकसप्ततिर्महायुगमित्यर्थः। इह - मूर्त्तकाले। मन्वन्तरं मन्वारम्भतत्समाप्तिकालयोरन्तरकालमानमित्यर्थः। मूर्त्तकालमानभेदाभिज्ञैः कथ्यते। तस्य मनोरन्ते विरामे जाते सति कृतावद्सङ्ख्यः।

मदुक्तकृतयुगवर्षमितः सन्धिः कालविद्भिः प्रकर्षेण द्वितीयमन्वारम्भपर्य्यन्तं भूतमाविमन्वोरन्तिमादिसन्धिरूपैककालेन कथितः। तत्स्वरूपमाह जलप्लव इति। जलपूर्णं सकला पृथ्वी तस्मिन् लोकसंहारकाले भवति। अथ कल्पप्रमाणं सविशेषमाह। ''ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश। कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः।''(सू सि०) ते एकसप्ततियुगरूपा मनवः सायम्भुवाद्याः समन्धयः स्वस्वसन्धिसहिताश्चतुर्द्दशसङ्ख्याकाः कल्पकाले ज्ञातव्याः। स्वसन्धियुक्तचतुर्द्दशमनुभिः कल्पः स्यादित्यर्थः। ननु ग्रन्थान्तरे कल्पमानं युगसहस्रं त्वया तु युगमानमेकसप्ततिगुणं मनुमानं ३०६७२००००कृतावद १७२८००० युक्तं ससन्धिमनुमानं ३०८४४८००० इदं चतुर्द्दशगुणं ४३१८७२००० कल्पप्रमाणं तच्च कृतीनं युगसहस्रमित्यत आह। कृतप्रमाण इति। कल्पादौ प्रथममन्वारम्भे कृतयुगवर्षमितो मनोश्चतुर्दशत्वेऽप्याद्यः पञ्चदशकः सन्धि कालज्ञैरुक्तः। तथा च कृतवर्षानन्तरं प्रथममन्वारम्भ इति तद्वर्षयोजनेनाविरोध इति भावः। अथ ब्रह्मणो दिनरात्र्योः प्रमाणमाह। ''इत्थं युगसहस्रेण भूतसंहारकारकः। कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती।'' इत्थं पूर्व्वोक्तप्रकारसिद्धेन युगसहस्रेण भूतसंहारकारको लयात्मकः कल्पकालो ब्राह्मं ब्रह्मणः सम्बन्धहः दिनं कालज्ञैरुक्तम्। तस्य ब्रह्मणस्तावती दिनपरिमिता शर्व्वरी रात्रिः। कल्पद्वयं तदहोरात्रमिति फलितार्थः। अथ ब्रह्मण आयुः प्रमाणमतीतवयः प्रमाणं चाह । ''परमायुः शतं यस्य तयाहोरात्रसङ्ख्यया। आयुषोऽर्द्धमितं तस्य शेषकल्पोऽयमादिमः'' परमपरं शृणु पूर्व्वोक्तं त्वया श्रुतमपरं च वक्ष्यमाणं शृणु त्वम् यद्वा परमेति दैत्यवरार्थकं सम्बोधनम्। त्वं तस्य ब्रह्मणस्तथा पूर्व्वोक्तयाहोरात्रमित्या कल्पद्वयरूपया शतं शतवर्षपरिमितमायुः शरीरधारणकालं जानीहि। एतदुक्तं भवति। अहोरात्रमानात् पूर्व्वपरिभाषया (३०) मासमानं तस्मात् पूर्व्वोक्तपरिभाषया (१२)ब्रह्मणो वर्षमानमेतच्छतसङ्ख्यया ब्रह्मायुरिति। न तु यथाश्रुतार्थेन कल्पशतद्वयमायुः, कोटादीनामपि दिन-सङ्ख्ययायुषोऽनुक्तेः सुतरां ब्रह्मणः शतदिनात्मकायुषोऽसम्भवात्। एतेन परमायुरित्येकं पदमिति निरस्तम् ब्रह्मणोऽनियतायुर्दायासम्भवात्। तस्य ब्रह्मण आयुः शत-वर्षरूपमस्यार्द्धं पञ्चाशद्वर्षपरिमितमितं गतम्। अयं वर्त्तमान आदिमः प्रथमः शेषकल्पः शेषायुर्दायस्य ब्रह्मदिवस उत्तरार्द्धस्य प्रथमदिवसो वर्त्तमान इति फलितार्थः। अथ

वर्त्तमानेऽस्मिन् दिवसेऽप्येतद्गतमित्याह''। ''कल्पादस्माच्च मनवः षड् व्यतीताः ससन्धयः। वैवस्वतस्य च मनोर्युगानां त्रिघनो गतः।'' अस्माद्वर्तमानात् कल्पद्ब्रह्मादिवसात् षट्सङ्ख्याका मनव एकसप्ततियुगरूपाः ससन्धयः सप्तभिः सन्धिभिः कृतयुगप्रमाणैः सहिता व्यतीता गताः। चकार आयुषोऽर्द्धमितमिति प्रागुक्तेन समुच्चयार्थकः। वर्त्तमानस्य सप्तमस्य मनोर्वैवस्वताख्यस्य युगानां त्रिघनस्त्रयाणां घनः स्थानत्रयस्थिततुल्यानां घातः सप्तविंशतिसङ्ख्यात्मको गतः। सप्तविंशति युगानि गतानीत्यर्थः। चः समुच्चये। अथ वर्त्तमानयुगस्यापि गतमेतदिति वदन्नभिमतकालेऽग्रतो वर्षगणः कार्य्य इत्याह। ''अष्टाविंशाद्युगादस्माद्यातमेतत्कृतं युगम्। अतः कालं प्रसङ्ख्याय सङ्ख्यामेकत्र पिण्डयेत्।'' अष्टाविंशति-तमाद्वर्तमानान्महायुगादेतदल्पकालेन पूर्व्वकाले साम्प्रतं स्थितं कृतं युगं गतम्। अतः कृतयुगान्तानन्तरमभिमतकाले कालं वर्षात्मकं प्रसङ्ख्याय गणयित्वा सङ्ख्यां पञ्चस्थानस्थितां भिन्नामेकत्रैकस्थाने पिण्डयेत् सङ्कलनविषयां कुर्य्यात्। सर्वेषां गतानां योगं कुर्य्यादित्यर्थः।

मासस्य त्रिंशत्तिथ्यात्मकतया ब्रह्ममासस्य त्रिंशत्कल्पघटितत्वात् तेषां कल्पनां नामानि –''कल्पानुकीर्त्तनं वक्ष्ये सर्व्वपापप्रणाशनम्। यस्यानुकीर्त्तनादेव वेदपुण्येन युज्यते। प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः। वामदेवस्तृतीयस्तु ततो रथन्तरोऽपरः। रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः। सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते। सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः। व्यान एकादशः प्रोक्तः तथा सारस्वतोऽपरः। त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः। कौर्म्मः पञ्चदशोज्ञेयः पौर्णमासी प्रजापतेः। षोड़शोनारसिंहस्तु समानस्तु ततः परः। आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्तथाऽपरः। मानवो विंशतिः प्रोक्तस्तत् पुमानिति चापरः। वैकुण्ठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथा परः। चतुर्विंशस्तथा प्रोक्तः सावित्रीकल्पसंज्ञकः। पञ्चविंशतिमो घोरो वाराहस्तु ततोऽपरः। सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः। माहेश्वरस्ततः प्रोक्तो त्रिपुरो यत्र घातितः। पितृकल्पस्तथान्ते तु या कुहूर्ब्रह्मणः स्मृताः। इत्ययं ब्रह्मणोमासः सर्व पापप्रणाशनः। आदावेव हि माहात्म्यं यस्मिन् यस्य विधीयते। तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा।''

तदारम्भकालश्च ब्रह्मसिद्धान्ते उक्तः चैत्रसितादेर्भानोर्वर्षर्त्तुमासयुगकल्पाः। सृष्ट्यादौ लङ्कायामिह प्रवृत्ताः दिनैर्वत्सः चैत्रसितादेः चैत्रशुक्लप्रतिपदमारभ्येत्यर्थः। ब्रह्मपु० ''चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि। शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति। प्रवर्त्तयामास तदा कालस्य गणनामपि'' इति कालसामान्यगणनस्य तत आरभ्योक्तेः एवं चैत्रशुक्लप्रतिपदि कल्पप्रारम्भेऽपि ''माघशुक्लतृतीयायां कृष्णायां फाल्गुनस्य च। पञ्चमी चैत्रमासस्य यथैवाद्या तथा परा। शुक्ला त्रयोदशी माघे कार्त्तिकस्य तु सप्तमी। नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम्। कल्पानामादयो ह्येता दत्तस्याक्षयकारकाः।'' वाराहवाक्यानि यदि समूलानि तदा कल्पभेदादविरूद्धानि कल्पादित्वेन तत्तत्तिथिषु आह कर्त्तव्यतोपयोगिपारिभाषिकत्व-परतया वा समर्थनीयानि। अतएव ''सुरासुराणामन्योन्यमहोरात्रं विपर्य्ययात्। यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात्। मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्। न तत्र द्युनिशोर्भेदो ब्राह्मं कल्पः प्रकीर्त्तितम्।'' इत्यादिना युगमन्वन्तरकल्पानां सौरत्वेनोक्तिः। सौरमाने च नियतयुगादिकालेषु अनियततिथिसम्भवेऽपि सर्वेषां कल्पानामादौ चैत्र-सितादितिथिरेव नियता प्रागुक्तवचनप्रामाण्यात्। किन्तु प्रागुक्तमातस्ये ब्राह्मकल्पानां चान्द्रत्वोक्तेः चान्द्रत्वमपि तेन तिथिभेदसम्भवः सूर्यसिद्धान्तं वाक्यं तु ग्रहस्पष्टीकरणोपयोगित्वविरोधः।

**कल्पक्षय** पु० कल्पस्य सृष्टेः रचनाविशेषस्य क्षयोयत्र। प्रलये।

**कल्पान्त** पु० कल्पस्यान्तो यत्र। प्रलये।

**कविपुत्र** पु० कवेः भृगुसुतस्य पुत्रः। भार्गवे। शुक्राचार्य्ये। भृगोः पुत्रः। कविविद्वान्। शुक्रः कविसुतो ग्रहः। कविसुतादयोऽप्यत्र।

**कशेरु(रू)** स्त्री० कं जलं वातं वा शृणाति। तृणकन्दभेदे। भारतवर्षस्य नवखण्डान्तर्गते खण्डभेदे पु०। ''ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम्। नागं च सौम्यमिह वारुणमन्त्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये।''(सि शि०)

**कषाकु** पु० अग्नौ सूर्य्ये च।

**काकिणी** स्त्री० पणचतुर्थभागे च। ''वराटकानां दशकद्वयं यत् सा काकिनी(णी)

ताश्च पणश्चतस्रः ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः।''(लीला०)

**कार्त्तिक** न० कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कृत्तिका। कार्त्तिकी साऽस्मिन् मासे। वैशाखावधिके सप्तमे चान्द्रेसमासे। यन्मासीयपौर्णमास्यां कृत्तिकानक्षत्र-सम्बन्धः सम्भवति तादृशे मासे तस्य च यथा तथात्वं तथा सूर्यसिद्धान्त रङ्गनाथाभ्यां दर्शितं यथा ''नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः। कार्त्तिक्यादिषु संयोगो कृत्तिकादि द्वयं द्वयम्।''(सू सि०) माससञ्ज्ञा महानक्षत्रनाम्नेति। पर्वान्तयोगतः पर्वान्तः पूर्णिमान्तः तस्य योगत्तत्सम्बन्धात्। नक्षत्रसंज्ञया मासाः। तुकाराच्चन्द्रामासा ज्ञेया इति तात्पर्यार्थः। तथा हि यद्दर्शान्तावधिकश्चान्द्रो मासस्तदभ्यन्तरस्थित-पूर्णिमान्तस्थितचन्द्रनक्षत्रसञ्ज्ञः। यथा चित्रासम्बन्धाच्चैत्रः। विशाखासम्बन्धा-द्वैशाखः। ज्येष्ठासम्बन्धाज्ज्यैष्ठः। आषाढासम्बन्धादाषाढ़ः। श्रवण सम्बन्धाच्छ्रावणः। भाद्रपदासम्बन्धाद्भाद्रपदः। अश्विनीसम्बन्धादाश्विनः। कृत्तिकासम्बन्धात् कार्तिकः। मृगशीर्षसम्बन्धान्मार्गशीर्षः। पुष्यसम्बन्धात् पौषः मघासम्बन्धान्माघः। फाल्गुनी-सम्बन्धात् फाल्गुन इति।

**कार्म्मुक** न० वृत्तक्षेत्रस्य परिध्यार्द्धात्मके रेखाभेदे। तदीयांशभेदे च। तयोर्धनुराकार-त्वात्तथात्वम्। तदानयनप्रकारः जीवानयनप्रकारमुक्ता दर्शितोयथा- ''अथ चापान-यनाय करणसूत्रं वृत्तम्। व्यासाब्धिघातयुतमौर्व्विकया विभक्तो जीवाङ्घिपञ्चगुणितः परिधेस्तु वर्गः। लब्धोनितात्परिधिवर्गचतुर्थभागादाप्ते पदे वृतिदलात्पतिते धनुः स्यात्।''(लीला०)

सूर्यसिद्धान्त रङ्गनाथाभ्याञ्च तथैवोक्तं यथा- ''ज्यां प्रोझ्य शेषं तत्त्वाश्वि-हतं तद्विवरोद्धतम्। सङ्ख्यातत्त्वाश्विसंवर्गे संयोज्य धनुरुच्यते।''(सू सि०)

यस्य धनुः कर्त्तुमिष्टं तस्मिन्शुद्धपूर्वं ज्यापिण्डं न्यूनीकृत्य शेषं पञ्चाकृति २२५ गुणं तद्विवरोद्धतं तयोः शुद्धाऽशुद्धपिण्डयोरन्तरेण भक्तं फलं शुद्धा ज्या यतमा यतमसङ्ख्या तत्त्वाश्विनोः संवर्गे घाते संयोज्य सिद्धं धनुः कथ्यते।

**काल** पु० कलयति सर्व्वम्। कालसमयवेलास्विति। ''त्रयीमयोऽयं भगवान् कालात्मा कालकृद्विभुः।''(सू सि०) कालविभागः इत्थं प्रदर्शितः -''लोकानामन्तकृत्कालः

कालोऽन्यः कलनातामकः। स द्विधा स्थूलसूक्ष्मत्वात् मूर्त्तश्चामूर्त्त उच्यते।।'' कालो द्विधा। तत्रैकः कालः अखण्डदण्डायमानः शास्त्रान्तरप्रमाणसिद्धः। लोकानाम् अन्तकृद्विनाशकः कालः। अन्यो द्वितीयो कालः खण्डकालः। कलनात्मकः ज्ञानविषयस्वरूपः। ज्ञातुं शक्यं इत्यर्थः। ''प्राणादि कथितो मूर्तः त्रुट्याद्योऽमूर्त्त संज्ञकः। षड्भिर्प्राणैर्विनाडी स्यात् तत्षष्ट्या नाडिका स्मृता।''

प्राणः स्वस्थसुखासीनस्य श्वासोच्छ्वासवर्त्ती कालो दशगुर्वक्षरोच्चार्यमाण आदिर्यस्तैदादृशः काल एव प्राणान्तर्गतस्त्रुटितत्परादिकोऽमूर्त्तसंज्ञः। अथामूर्त्तस्य मूर्तादिभूतस्य व्यवहारायोग्यत्वेन अप्रधानतया अनन्तरोद्दिष्टस्य भेदप्रतिपादनमुपेक्ष्य मूर्त्तकालस्य व्यवहारयोग्यत्वेन प्रधानतया प्रथमोद्दिष्टभेदान् षड्भिरिति आह। ''षड्भिर्प्राणैर्विनाडी स्यात्तत्षष्ट्या नाडिका स्मृता। नाडीषष्ट्यातुनाक्षत्रमहोरात्रं प्रकीर्त्तितम्। तत्त्रिंशता भवेन्मासः सावनोऽर्कादयेस्तथा। ऐन्दवस्तिथिभिस्तद्वत् सङ्क्रान्त्या सौर उच्यते। मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते।। सुरासुराणामन्योन्यं अहोरात्रं विपर्ययात्। तत्षष्टिः षड्गुणा दिव्यं वर्षमासुरमेव च।। तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम्। सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैः अयुताहतैः। सन्ध्या सन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्। कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया। युगस्य दशमो भागो चतुस्त्रिद्व्येकसङ्गुणः। क्रमात् कृतयुगादीनां षष्ठांशः सन्धयः स्वकाः। युगानां सप्तसिस्सैका मन्वन्तरमिहोच्यते। कृताब्दसङ्ख्ययास्तस्यान्ते सन्धिः प्रोक्तो जलप्लवः। ससन्धयस्ते मनवः कल्पे ज्ञेया चतुर्दश। कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशस्मृतः। इत्थं युगसहस्रेण भूतसंहारकारकः। कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती। परमायुः परं तस्य तयाहोरोत्रसङ्ख्यया। आयुषोर्द्धमितं तस्य शेषे कल्पोयमादितः।।''(सू सि०)

**कालकृत** पु० कालं कालमानं करोति स्वगत्या इति। सूर्य्ये। ''कालात्मा कालकृद्विभुः।''(सू सि०)

**कालचक्र** न० कालस्य कालगतेश्चक्रमिव। द्वादशारे कालचक्रभेदे।

**कालचिन्तक** पु० कालं चिन्तयति विचारयति।

**कालज्ञ** त्रि० कालं योग्यकालं ज्योतिषोक्तकालायववं वा जानाति।

**कालज्ञान** क० कालो ज्ञायतेऽनेन। सौरागमादि ज्योतिःशास्त्रे ''विदितस्ते मया भावस्तोवितस्तपसा ह्यहम्। दद्यां कालाश्रयं ज्ञानं ग्रहाणां चरितं तथा।''(सू सि०) इत्युपक्रम्य सूर्यसिद्धान्ते मयनामासुराय स्वांशपुरुषद्वारा कालज्ञानमुक्तम्।

**कालप्रवृत्ति** स्त्री० खण्डकालस्य व्यवहारारम्भे। तत्प्रवृत्तिकालश्च उक्तोयथा - ''लङ्कानगर्यामुदयाच्च भानोस्तस्यैव वारे प्रथमं बभूव। मघोः सितादेर्दिनमासवर्ष- युगादिकानां युगपत् प्रवृत्तिः।''(सि शि०) कालस्य व्यक्तीनामपि दिनमासवर्षयुगादीनां युगपदेकवेलया प्रवृत्तिर्बभूव। एतदुक्तं भवति। चन्द्रार्कयोर्मेषादिस्थयोश्चैत्रस्य शुक्लपक्षादिः प्रतिपत्। अतो मघोः सितादेर्दिनानां सौरादिमासानां वर्षाणां युगानां मन्वन्तराणां कल्पस्य च तदैव प्रवृत्तिः। अथोदयाच्च भानोः। स चोदयः कस्मिन् देशे। लङ्कानगर्याम्। तथा तस्यैव वारेचादित्यवार इत्यर्थः।

**कालयुक्त** पु० प्रभवादिषष्टिसंवत्सरान्तर्गते द्विपञ्चाशत्तमे वत्सरभेदे।

**कालांश** पु० कालरूपोंऽशः। ग्रहाणां दृश्यतायोग्ये काले।

**कालात्मक** पु० काल आत्मास्य। कालस्वरूपे परमेश्वरे। ''कालात्माकालकृ- द्विभुः।''(सू सि०) कालात्मकोऽप्यत्र।

**कालाध्यक्ष** पु० कालानां खण्डकालानामध्यक्षः स्वगत्या प्रवर्त्तनात्। १. सूर्य्ये।

**कुज** पु० कोः पृथिव्या जायते। मङ्गलग्रहः। कल्पे तदीयभगणादिकमुच्यते ''युग्मयुग्मशरनागलोचनव्यालषण्णवयमाश्विनोऽसृजः ९६८२८५२२।''(सि शि०)

**कुज्या** स्त्री० सिद्धान्तशिरोमणौ उक्ते वृत्ताकाराक्षेत्रार्द्धावयवधनुः साधनाङ्गज्या- पञ्चकान्तर्गते जीवाभेदे। ''उन्मण्डले प्रागपरोत्थसूत्रात् क्रान्तिज्यका कोटिरथ द्युरात्रे। कुज्या भुजोऽग्रा क्षितिजे च कर्णः क्षेत्रं तथेदं त्रिभुजं प्रसिद्धम्।'' ज्यापञ्चकं च तत्र दर्शितम् यथा इदानीं पञ्चज्यासाधनमाह। ''युक्तायनांशादपमः प्रसाध्यः कालौ च खेटात् खलु भुक्तभोग्यौ। जिनांशमौव्या१३९७ गुणितार्कदोर्ज्यात्रिज्यो ३४३८ द्धृता क्रान्तिगुणोऽस्य वर्गम्। त्रिज्याकृतेः ११८१९१८४४ प्रोहापदं द्युजीवा क्रान्तिर्भवेत् क्रान्तिगुणस्य चापम्। अक्षप्रभासंगुणितापमज्या तद्वादशांशो भवति क्षितिज्या। सा त्रिज्यकाघ्नी विहृता द्युमौर्व्या चरज्यकास्याश्च धनुश्चरं स्यात्।''

**कुट्टक** त्रि० छेदके। लीलावत्यादौ प्रसिद्धे गणितोपयोगिक्रियाभेदे कुट्टकविधि–श्च लीलावत्यां संक्षेपेणोक्तः यथा – ''भाज्योहारः क्षेपकश्चापवर्त्यः केनाप्यादौ सम्भवे कुट्टकार्थम्। येन छिन्नौ भाज्यहारौ न तेन क्षेपश्चैतद्दुष्टमुद्दिष्टमेव। परस्परं भाजितयोर्ययोर्यः शेषस्तयोः स्यादपवर्त्तनं सः। तेनापवर्त्तेन विभाजितौ यौ तौ भाज्यहारौ दृढसंज्ञितौ स्तः। मिथो भजेत् तौ दृढभाज्यहारौ यावद्विभाज्ये भवतीह रूपम्। फलान्यधोऽधस्तदधो निवेश्यः क्षेपस्ततः शून्यमुपान्तिमेन। स्वोर्ध्वेहतेऽन्येन युते तदन्त्यं त्यज्येन्मुहुः स्यादिति राशियुग्मम्। ऊर्द्धोविभाज्येन दृढेन तष्टः फलं गुणः स्यादधरो हरेण। एवं तदैवात्र यदा समस्ताः स्युर्ल्लब्धयश्चेद्विषमास्तदानीम्। यदागतौ लब्धिगुणौ विशोध्यौ स्वतक्षणाच्छेषमितौ तु तौ स्तः। भवति कुट्टविधेर्युतिभाज्ययोस्समपवर्त्तितयोरपि वा गुणः। भवति यो युतिभाजकयोः पुनः स च भवेदपवर्त्तनसङ्गुणः। गुणलब्ध्योस्समं ग्राह्यं धीमता तक्षणे फलम्। हरतष्टे धनक्षेपे गुणलब्धी तु पूर्ववत्। क्षेगजे तक्षणाच्छुद्धे गुणाप्ती स्तो वियोगजे। धनभाज्योद्भवे तद्वद्भवेतामृणभाज्यजे। क्षेपतक्षणलाभाढ्या लब्धिः शुद्धौ तु वर्जिता। अथ वा मागहारेण तष्टयोः क्षेपभाज्ययोः। गुणः प्राग्वत्ततोलब्धिर्भाज्याद्धतयुतोद्धृतात्। क्षेपाभावोऽथ वा यत्र क्षेपः शुद्धेद्धरोद्धृतः। ज्ञेयः शून्यं गुणस्तत्र क्षेपोहारहृतः फलम्। इष्टाहतस्वस्वहरेण युक्ते ते या भवे तां बहुधा गुणाप्ती।''

**कुडप(व)** पु० प्रस्थचतुर्थांशरूपे परिमाणभेदे। ''द्रोणस्तु खार्य्याः खलु षोडशांऽशः स्यादाढको द्रोणचतुर्थभागः। प्रस्थश्चतुर्थांश इहाढकस्य प्रस्थाङ्घिराद्यैः कुडवः प्रदिष्टः।''(लीला०)

**कुदिन** न० कोः पृथिव्याः भ्रमणेन दिनम्। सावनदिने। तदुक्तं सूर्यसिद्धान्ते– ''उदयादुदयं भानोः सावनं तत् प्रकीर्त्तितम्। सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः।'' सूर्य्यस्योदयादुदयकालमारभ्याव्यवहितोदयकालपर्यन्तं यत् कालात्मकं तत् सावनं मानज्ञैरुक्तम्। एतेनोदयद्वयान्तरात्मककालस्य गणनया सावनानि वसुद्य–ष्टाद्रीत्यादिना मध्यमाधिकारोक्तानि भवन्ति। तद्व्यवहारमाह। यज्ञकालविधिरिति यज्ञस्य यः कालस्तस्य गणना तैः सावनैः। तुकारोऽन्यमाननिरासार्थकैवकारपरः। ओदयादोदयं भानोर्भूमिसावनवासराः।।

ननु भोदया भ्रमणैरित्यादिना पूर्वं सर्वेषां सावनदिवसा उक्ता इत्यत्र कस्य ग्राह्या इत्यतः सूर्य्यसावनस्वरूपकथनच्छलेनोत्तरमाह। ओदयादिति। सूर्य्य-स्योदयकालमारभ्याव्यवहिततदुदयकालपर्यन्तं यः कालः स एको दिवसः। इति ये दिवसास्ते भूमिसावनवासराः। भूदिवसा उदयस्य भूसम्बन्धनावगमात् सावनदिवसाश्चेत्यर्थः। तथा च निरुपपदसावनभूमिशब्दाभ्यां सूर्य्यस्य वासरा एव नान्येषां सोपपदत्वाभावादिति भावः। ते कियन्त इत्यतस्तत्प्रमाणमाह ''वसु-द्व्यष्टाद्रिरूपाङ्क सप्ताद्रितिथयो युगे।''(सू सि०)''अष्टाश्विगजसप्तभू-गोनगसप्तपञ्चभूमिता १५७७९१७८२७ युगे सूर्य्यसावनदिवसाः'' रङ्गना०। अन्यथोक्तं यथा ''भूदिनानि शरवेदभूपगोसप्तसप्ततिथयोऽयुताहताः १५७७९१९४५००००। भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा।''(सि शि०)

एकस्मिन् रविवर्षे यावन्तो भभ्रमाः स्युस्तावन्त एवैकोना रविसावनदिवसा भवन्ति। यतो रविः प्राग्गत्या एकं पर्यायं गतः। अतो भगणसंख्ययोना भभ्रमाः कहा भवन्ति। एवमन्येषामपि ग्रहाणां कुदिनानि स्युरित्युपपन्नम् ।

इनोदयद्वयान्तरं तदर्कसावनं दिनम्। तदेव मेदिनीदिनं भवासरस्त भभ्रमः इति सिद्धान्तशिरोमणिः। इनोदयद्वयान्तरमिति। अर्कोदययोरन्तरं यत् तदर्कसावनं दिनम्। तदेव कुदिनसंज्ञं ज्ञेयम्। अतोऽपि पूर्ववन्मासवर्षादिकल्पना। अत्रार्क-ग्रहणमुपलक्षणं तेनान्येषामपि ग्रहाणां तदुदयद्वयान्तरं तत्सावनमिति। तद्दिवसस्य कार्य्यविशेषे आदर्त्तव्यतामाह-''सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमा ग्रहभुक्तिस्तु सावनेनैव गृह्यते।''(सू सि०)

सूतकं जन्ममरणसम्बन्धि। आदिपदग्राह्यं चिकित्सितचान्द्रायणादि तस्य परिच्छेदो निर्णयः। दिनाधिपमासेश्वरवर्षेश्वराः। तथा-समुच्चये। ग्रहाणां गतिर्मध्यमा। तुकारात् स्फुटगतेर्निरासः तस्याः प्रतिक्षणं वैलक्षण्याद्दिनसम्बन्धस्याभावात्। एतेन स्पष्टगत्या स्पष्टग्रहस्य चालनं निरस्तं स्थूलत्वादिति सूचितम्। सावनमानेन। एवकारादन्यमान-निरासः।''प्रायश्चित्तं सूतकाद्यं चिकित्सा यज्ञाद्येवं कर्म वारादिकं च। शास्त्रे त्वस्मिन् खेचराणां च चारा विज्ञातव्याः सावनात् भास्करीयात्'' श्रीपतिः।। कुवासरभूमिदिनादयोऽप्यत्र। ज्योतिषनिषिद्धे दिने च।

**कुभा** स्त्री० कोः पृथिव्याः भा। पृथिवीच्छायायाम् ''राहुः कुभामण्डलगः शशाङ्कम्''।

**कुमारिका** स्त्री० भारतवर्षस्य नवसुखण्डेषु। खण्डभेदे यथाह – ''ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदनश्च कुमारिकाख्यम्। नागञ्च सौम्यमिह वारुणमन्त्य– खण्डं गान्धर्व्वसंज्ञमिति भारतवर्षमध्ये। वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजनाः निवसन्ति सर्वे।''(सि शि०)

**कृत** त्रि० युगभेदे। सत्ययुगे। सम्पादिते,जनिते,अभ्यस्ते। चतुर्युगेष्वेकः। यथा ''तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम्। सूर्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः। सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्। कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया। युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः। क्रमात् कृतयुगादीनां षष्ठांशः सन्ध्ययोः स्वकः।''(सू सि०) ततश्च मानुषमानेन १७२८०००वर्षास्तन्मानम्।'' तदेतदुक्तं– ''खखाभ्रदन्तसागरैर्युगाग्नियुग्मभूगुणैः।''(सि शि०) क्रमेण सूर्य्यवत्सरैः कृतादयो युगाङ्घयः। स्वसन्ध्यकातदंशकैर्निजार्क १२ भागसंमितैः। युताश्च तद्युतौ युगं रदाब्धयोऽयुताहताः खखाऽभ्रदन्तसागरैरिति। रविवर्षाणां लक्षचतुष्टयेन द्वात्रिं– त्सहस्राधिकेन चतुर्गुणेन कृतं नाम प्रथमो युगचरणः १७२८०००। त्रिगुणेन त्रेतासंज्ञो द्वितीयो युगचरणः १२९६०००। द्विगुणेन द्वापराख्यस्तृतीयः ८६४००। एकगुणेन कलिश्चतुर्थः ४३२०००। किंविशिष्टा एते युगचरणाः। स्वसन्ध्य– कातदंशकैर्निजार्कभागसंमितैर्युताश्च। युगचरणप्रमाणस्य यो द्वादशांशस्तत्प्रमाणा तस्य चरणस्य सन्ध्या। सा चरणादौ भवन्ति। तावांश्च सन्ध्यांशः। स चरणस्यान्ते। एवं स्वसन्ध्यासन्ध्यांशैः सह एते युगचरणाः कथिता इत्यर्थः। ततश्च कृतादौ सन्ध्यावर्षाणि १४४०००। कृतान्ते सन्ध्यांशः १४४०००। त्रेतादौ सन्ध्या १०८०००। त्रेतान्ते सन्ध्यांशः १०८०००। द्वापरादौ सन्ध्या ७२०००। द्वापरान्ते सन्ध्यांशः ७२०००,कलेरादौ ३६०० सन्ध्या तदन्ते ३६०० सन्ध्यांशः ।

**केतुकुण्डली** स्त्री० पञ्चस्वरोक्ते जन्मनक्षत्रभेदवशेन जन्मावध्येकैकवर्षे एकैक– ग्रहविशेषस्वामित्वज्ञापके चक्रभेदे। सा च यथा ''अर्को बुधः कुजोजीवः सोमः शुक्रस्तथैव च। राहुः शनैश्चरश्चैव ज्ञातव्या केतुकुण्डली। अर्कसौम्यान्तरे केतुः कुजजीवान्तरेऽपि च। सोमशुक्रान्तरे केतूराहुसौरान्तरे तथा। दद्यादुत्तरभाद्रादि

अष्टाविंशतिऋक्षकम्। त्रीणि त्रीणि च रव्यादौ एकैकम् केतुषु स्मृतम्। जन्मर्क्षात् प्रतिनक्षत्रं जन्माद्यवदे प्रकीर्त्तिताः।'' अयमर्थः यदि २६।२७।१ नक्षत्रेषु जन्म तदा सूर्य्यः प्रथमं वर्षेशः। तदुत्तरं केतुप्रभृतयः शन्यन्ताः२। भरण्यां जन्मनि केतुः प्रथमं वर्षेशस्ततः बुधादयः सूर्य्यान्ताः।३।४।५ ऋक्षेषु बुधः प्रथमवर्षेशः ततः कुजादयः केत्वन्ताः। ६।७।८। कुजः प्रथमं ततः केत्वादयः बुधान्ताः। ९ ऋक्षे केतुः ततोजीवादयः कुजान्ताः १०।११।२२ ऋक्षेषु जीवः ततः सोमादयः केत्वन्ताः। १३।१४।१५। सोमः ततः केत्वादयः जीवान्ताः। १६ ऋक्षे केतुः ततः शुक्रादयः सोमान्ताः। १७।१८।१९। ऋक्षेषु शुक्रः ततः राहुप्रभृतयः केत्वन्ताः। २०।२१।१।२२ ऋक्षेषु राहुः ततः केत्वादयः शुक्रान्ताः २३ केतुः ततः शन्यादयः राह्वन्ताः। २४।२५।२६। ऋक्षेषु शनिः ततः सूर्यादयः केत्वन्ताः। सर्व्वत्र आरोहक्रमा-नन्तरमवरोहक्रमो ग्राह्यः। एवं द्वादशसु वर्षेषु तेषु पुनः सूर्य्यादीनां वर्षाः। ग्रहाणां फलविशेषस्तु केतुपताकाचक्रोक्तदिशोन्नेयः। अत्र च बहुषु स्थानेषु केतोरवस्थानेन केतुप्राधान्यात् केतुकुण्डलीत्वम्।

**केतुवृक्ष** पु० केतुभूतोवृक्षः। मेरोश्चतुर्दिक्षु वर्त्तमानविष्कम्भपर्वतमन्दरादीनां चिह्नरूपे वृक्षभेदम्। ''विष्कम्भशैलाः किल मन्दरोऽस्य (मेरोः) सुगन्धशैलः (गन्धमादनः) विपुलः सुपार्श्वः। तेषु क्रमात् सन्ति च केतुवृक्षः कदम्ब जम्बू वटपिप्पलाख्याः।'' (सि शि०) ''विष्कम्भारचिता मेरोर्योजनायतमुच्छ्रिताः। पूर्वेण मन्दरोनाम दक्षिणे गन्धमादनः। विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः। कदम्बस्तेषु जम्बुश्च पिप्पलोवट एव च। एकादशशतायामाः पादपाः गिरिकेतयः।''

**केन्द्र** न० ''वृत्तस्य मध्यं किल केन्द्रमुक्तम्। केन्द्रं ग्रहोच्चान्तरमुच्यतेऽतः। यतोऽन्तरे तावति तुङ्गदेशान्नीचोच्च वृत्तस्य सदैव केन्द्रम्।'' सिद्धान्तशिरोमणौ गोलाध्यायोक्ते वृत्तक्षेत्रस्य मध्यस्थाने। ग्रहाणामुच्चस्थानान्तरे च। तदानयनप्रकारः तस्य समविषमादिसंज्ञाभेदौ च सूर्यसिद्धान्तरङ्गनाथाभ्यां दर्शितौ यथा – ''ग्रहं संशोध्य मन्दोच्चात् तथा शीघ्राद्विशोध्य च। शेषं केन्द्रपदं तस्माद्भुजज्या कोटिरेव च।'' ग्रहं राश्यादिकं मन्दोच्चात् प्रागानीतस्वकीयराश्यादिकं मन्दोच्चभागात् संशोध्योनीकृत्य शीघ्रात् प्रागानीतराश्यादि शीघ्रोच्चात्, च समुच्चये ऊनीकृत्य शेषं राश्यात्मकं तथोच्चसम्बन्धेन केन्द्रं मन्दोच्चाद्धीनो ग्रहो मन्दकेन्द्रम्। शीघ्रोच्चाद्धीनो ग्रहः शीघ्र

केन्द्रं भवतीत्यर्थः। तस्मात् केन्द्रात् पदं राशित्रयात्मकं विषमं समं पदं ज्ञेयम्। त्रिराश्यन्तर्गतं चेत् प्रथमं विषमं पदम्। ततः षड्राश्यन्तर्गतं चेत् त्र्यूनं केन्द्रं द्वितीयं समं पदम्। ततो नवराश्यन्तर्गतं चेत् षडूनं तृतीयं विषमं पदम्। ततो नवीनं चतुर्थं पदं सममित्यर्थः। तस्मात् पदाद्भुजस्य ज्या कोटिः कोटेर्ज्या। चः समुच्चये। एवकारात्तदाकारद्वयं साध्यमित्यर्थः।

**कोटि** स्त्री० धनुषोऽग्रभागे अमरः। लीलावत्युक्ते त्रिकोणादिक्षेत्रावयवरेखाभेदे ''तथायते तद्भुजकोटिघातः'' '' त्रिभिर्भैः पदं तानि चत्वारि चक्रे क्रमात् स्याद्युग्म-संज्ञा च तेषाम्। अयुग्मे पदे यातम् एष्यन्तु युग्मे भुजो बाहुहीनं त्रिभं कोटिरुक्ता।''(सि शि०) सिद्धान्तशिरोमणौ उक्ते राशिचक्रस्य तृतीयांशे। तत्रोक्ते छायानिरूपणार्थे कल्प्यमानक्षेत्रावयवरेखाभेदे। यथा ''दिक्सूत्रसम्पातगतस्य शङ्कोश्छायाग्र-पूर्व्वापरसूत्रमध्यम्। दोर्दोः प्रभावर्गवियोगमूलं कोटिर्नरात् प्रागपरा ततः स्यात्।''(सि शि०) दिक्संपातस्थस्य शङ्कोर्भाग्रं यत्र पतति तस्य पर्व्वापरा कोटिरिति। क्षेत्रावयवभेदे च यथा ''योऽधो नरो दिनकृतः स विधोरुदग्रशङ्क्वन्वितो मम मता खलु सैव कोटिः।''

**कोटिज्या** स्त्री० सूर्यसिद्धान्ते उक्ते ग्रहस्पष्टतासाधनाङ्गे चापावयवभेदे। तदानयनं यथा ''गताद्भुजज्या विषमे गम्यात् कोटिः पदे भवेत्। युग्मे तु गम्याद्बाहुज्या कोटिज्या तु गताऽभवेत्।'' प्रथमे तृतीये च पदे केन्द्रस्य यवनांशो गतो भवेत्तस्माद् भुजज्या साध्या, केन्द्रस्य यवनांशो गम्यो भवेत्तस्मात् कोटिज्या भवेत्। युग्मे पदे तु गम्यात् बाहुज्या गतात् केन्द्रस्य गतभागात् तु कोटिज्या भवेत् । समे पदे गम्यो भुजो गता कोटिर्भवतीत्यर्थः।

**कौश** न० कुशाः भूम्ना सन्त्यत्र। कान्यकजदेशे। कुशद्वीपे। ''शाकं ततः शाल्मलमत्र कौशम् क्रौञ्चं च गोमेदकपुष्करे च। द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति।'' (सि शि०)

**क्रकचव्यवहार** पु० लीलावत्युक्ते क्रकचच्छेद्यवस्तुनोवेतन ज्ञानार्थे तत्फलज्ञापके गणितभेदे यथा- क्रकचव्यवहारे करणसूत्रं वृत्तम्। ''पिण्डयोगदलमग्रमूल-यौदैर्घ्यसङ्गुणितमङ्गुलात्मकम्। दारुदारणपथैः समाहतं षट्स्वरेषु विहृतं करात्म-

कम्।'' उदाहरणम् - मूले नखा(२०)ङ्गुल-मितोऽथ नृपा(१६)ङ्गुलोऽग्रे पिण्डः शताङ्गुलमितं किल यस्य दैर्घ्यम्। तद्दारुदारणपथेषु चतुर्षु किं स्याद्धस्तात्मकं वद सखे। गणितं द्रुतं मे।




पिण्डयोग३६दलं। १८। दैर्घ्येण १०० सङ्गुणितं १८००। दारुदारणपथैश्चतुर्भिगुणितं ७२००। षट्स्वरेषु ५७६ विहृतं जातं करात्मकंगणितं २५/२। क्रकचान्तरे करणसूत्रं सार्द्धवृत्तम्। छिद्यते तु यदि तिर्य्यगुक्तवत्पिण्डविस्तृतिहतेः फलं तदा। इष्टिकाचितिदृषच्चिति-खातक्राकचव्यवहृतौ खलु मूल्यम्। कर्म्मकारजनसम्प्रतिपत्त्या तन्मृदुत्वकठिनत्ववशेन। उदाहरणम्। यद्विस्तृतिर्द्दन्त ३२ मिताङ्गुलानि पिण्डिस्तथा षोडश यत्र काष्ठे। छेदेषु तिर्य्यङ्नवसु प्रचक्षु किं स्यात् फलं तत्र करात्मकं मे। न्यासः विस्तारः ३२ पिण्डः ।१६। पिण्डविस्तृतिहतिः ५१२। दारुदारणमार्गैर्नवभिर्हता ४६०८। षट्स्वरेषु ५७६ विहृता जातं फलं हस्ताः।

३२

१६ | क्रा | क | व्य | का | ष्ठि | स | म | म् | १६

३२

**क्रमज्या** स्त्री० ग्रहाणां स्पष्टाधिकारे उक्ते चतुर्विंशत्यर्द्धजीवाभेदे तन्मानं तत्रोक्तं यथा -''तत्त्वाश्विनो नन्दसमुद्रवेदाश्चन्द्राद्रिषट्का गगनाङ्कनागाः। पञ्चाभ्ररुद्रास्ति-थिविश्वतुल्या आद्यैर्निरुक्ता नखवाणचन्द्राः। नन्दावनीशैलभुवो दिगङ्कचन्द्रा हुताशग्रहपूर्णदस्राः। तुरङ्गषट्काकृतयः कुरामसिद्धाः शराष्टेषुयमाः क्रमेण।

गजाश्विभान्यङ्कशरावदस्रास्तुरङ्गसप्त-ग्रहलोचनानि। अम्भोधिकुम्भ्यभ्रगुणास्तुर-ङ्गशैलेन्दुरामा रसभूतदन्ताः। कुदन्तलोका द्वितुरङ्गदेवा गोऽभ्राब्धिलोकाः कुगुणाब्धिरामाः। भुजङ्गलोकाब्धिगुणाः क्रमज्या ।''(सि शि०) इह हि स्पष्टी-करणप्रभृति सर्वकर्मार्धज्याभिः प्रतिपाद्यते। यतो ग्रहवलये कोऽप्यवधिभूतः प्रदेशोमध्यशब्देनोच्यते। तस्मान्मव्यसूत्रात् तिर्यक्स्थोग्रहो वलयेऽर्धज्याग्रे भवति। अतोऽर्धज्याभिः सर्वं कर्म। तत्र भगणकलाङ्कितवृत्तचतुर्थांशे ईदृशान्येव चतुर्विंशतिर्ज्यार्धानि भवन्ति। २४ क्रमज्याङ्काश्च यथा २२५। ४४९। ६८१। ८९०। ११०५। १३१५। १५२०। १७१९। १९१०। २०९३। २२६७। २४३१। २५८५। २७२८। २८५९। २९७७। ३०८४। ३१७७। ३२५६। ३३२१। ३३७२। ३४०९। ३४३१। ३४३८।

तासां तथामानं समर्थितं सूर्यसिद्धान्त रङ्गनाथाभ्यां यथा ''राशिलिप्ताष्टमो भागः प्रथमं ज्यार्धमुच्यते। तत्तद्विभक्तलब्धोनमिश्रितं तद् द्वितीयकम्। आद्येनैवं क्रमात् पिण्डान् भक्त्वा लब्धोनसंयुताः। खण्डकाः स्युश्चतुर्विंशज्ज्यार्धपिण्डाः क्रमादमी।''

एकराशिकलानामष्टादशशतानामष्टमोंऽशस्तत्त्वाश्विमितः २२५ प्रथममाद्यं ज्यार्धं सम्पूर्णजीवार्धपिण्डकः कथ्यते तदभिज्ञैः। ततः प्रथमज्यार्धात् तेन प्रथमज्यार्धेन भक्ताल्लब्धेन हीनमन्यस्याप्रसङ्गात् प्रथमज्यार्धमनेन युक्तं तत् प्रथमज्यार्धं द्वितीयकं ज्यार्धं भवति द्विगुणप्रथममेकोनम्। तृतीयादीनामानयनार्थमुक्तप्रकारमतिदिशति आद्येनेति। प्रथमज्यार्द्धपिण्डेन। एवमुक्तरीत्या क्रमात् सिद्धपिण्डान् भक्त्या लब्धेरूनमाद्यं खण्डमनेन युताः खण्डका असिद्धाव्यवहितसिद्धज्यार्धपिण्डा असिद्धपिण्डा भवन्ति। यथा प्रथमखण्डं २२५ प्रथमभक्तं फलं १ तेन हीमं खण्डं २२४ तेन युक्तं द्वितीयखण्डं ४४९। तच्च प्रथमभक्तं फलम् २ अर्धाधिकावयव-स्यैकाधिकत्वेन ग्रहणस्य साम्प्रदायिकत्वात्। फलैक्येन ३रीनं प्रथमम् २२२ अनेन द्वितीयखण्डो ४४९ युतस्तृतीयम् ६७१। एवमिदं प्रथमखण्डभक्तं फलम् ३अनेन पूर्वफलैक्येन ३युतं जातं सर्व्वफलैक्यम् ६ अनेन प्रथमं खण्डं हीनम् २१९ अनेन तृतीय ६७१युतं चतुर्थम् ८९०। एवमिदं प्रथमखण्डभक्तं फलं ४ पूर्व्वलब्धैक्येन ५रीनं प्रथमखण्डरूपं २१९ ज्यान्तररूपखण्डकमनेन ४ हीनं २१५ चतुर्थ ८७० युतं

पञ्चमं ११०५ एवमग्रेऽपि। अथोक्तरीत्याऽसङ्ख्यखण्डानां सम्भवात् खण्डनियममाह स्युरिति। एवं चतुर्धवंशत्सङ्ख्याका ज्यार्धपिण्डाः कार्या न तदधिकाः।

**क्रान्ति** स्त्री० पादविक्षेपे गतौ च। सूर्यसिद्धान्त रङ्गनाथाभ्यां दर्शितं यथा– ननु गोले वृत्ते द्वादशराशीनां सत्त्वादन्यथा चक्रकलानुपपत्तेरित्यत्रैकवृत्ताभावात् कथं राश्यङ्कनं? राशिविभागानुपपत्तिश्च अन्तरालभागस्याकाशात्मकत्वादि अतो वृत्तकथमच्छलेन पूर्वोक्तं स्पष्टयन् सूर्य्यस्तद्वृत्ते भगणभोगं करोतीत्याह । ''अयनादयनं चैव कक्षा तिर्यक् तथाऽपरा। क्रान्तिसञ्ज्ञा तया सूर्य्यः सदा पर्येति भासयन्।''(सू सि०) अयनस्थानमारभ्यायनं परिवर्त्तनं तदयनस्थानपर्यन्तम्। चकार आरम्भसमाप्त्यो–र्भिन्नायनस्थाननिरासार्थकः। अपरा गोले आधारवृत्तप्रमाणा वृत्तरूपाकक्षा तथा राश्यङ्कमार्गेण। एवकारोऽभ्यमार्गव्यवच्छेदार्थकः। तिर्यक् उक्तवृत्तानुकारविलक्ष–णानुकारा क्रान्तिसञ्ज्ञा क्रमणं क्रान्तिः ग्रहगमनभोगज्ञानार्थं वृत्तं तत्सञ्ज्ञमुपकल्पितम्। अयनविषुवद्द्वयसंज्ञं क्रान्तिवृत्तं द्वादशराश्यङ्कित गोले निबन्धयेदिति तात्पर्यार्थः। भासयन् भुवनानि प्रकाशयन् सन् सः सूर्य्यः। एतेन चन्द्रादीनां निरासः। सदा निरन्तरं तया क्रान्तिसञ्ज्ञया कक्षया पर्यति स्वशक्त्या गच्छन् भगणपरिपूर्तिभोगं करोति। सूर्य्यगत्यनुरोधेन नियतं क्रान्तिवृत्तं कल्पितमिति भावः। ननु चन्द्राद्याश्च स्वकैः पातैरपमण्डलमाश्रितैः। ततोऽपकृष्टा दृश्यन्ते विक्षेपान्तेष्वपक्रमात्। चन्द्रादयोऽर्क–व्यतिरिक्ता ग्रहाः स्वकैः स्वकीयैः पातैः पाताख्यदैवतैरपमण्डलं क्रान्तिवृत्तमाश्रितैः स्वस्वगोलस्थानेऽधिष्ठितैस्ततः क्रान्तिवृत्तान्तर्गतग्रहभोगस्थानादित्यर्थः। चकारा–द्विक्षेपान्तरेणपकृष्टा दक्षिणत उत्तरतो वा कर्षिता भवन्ति। अतः कारणादपक्रमात् क्रान्तिवृत्तान्तर्गतस्वभोगस्थानादित्यर्थः। दक्षिणत उत्तरतो वा विक्षेपान्तेषु गणि–तागतविक्षेपकलाग्रस्थानेषु भूस्थजनैददृश्यन्ते। तथा च क्रान्तिवृत्तं यथा विषु–वन्मण्डलेऽवस्थितं तथा क्रान्तिवृत्ते पातस्थाने तत्षड्भान्तरस्थाने च लग्नमुक्तपरम–विक्षेपकलाभिस्तत्रिभान्तरस्थानादूर्ध्वाधक्रमेण दक्षिणोत्तरतो लग्नं च वृत्तं विक्षेपवृत्तं चन्द्रादिगत्यनुरोधेन स्वं स्वं भिन्नं कल्पितं तत्र गच्छन्तीति भावः। क्रान्तिस्पष्टता–प्रकारश्च सूर्यसिद्धान्त रङ्गनाथाभ्यां दर्शितो यथा अथ दिनरात्रिमानज्ञानार्थं चरानयनं विवक्षुः प्रथमं तदुपयुक्तां स्पष्टकालमाह –''विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता। दिग्भेदे वियुता स्पष्टा भास्करस्य यथा गता।''(सू सि०)

यस्य ग्रहस्य स्पष्टक्रान्तिरभीष्टा तस्य ग्रहस्यायनंशसंस्कृतस्य भुजज्यातः परमापक्रमज्येत्यादिना क्रान्तिरयनांशसंस्कृतग्रहगोलदिक्का ज्ञेया। तस्य विक्षेपोऽपि पूर्वोक्तप्रकारेण पातोनगोलदिक्को ज्ञेयः। गोलस्तु मेषादिषट्कमुत्तरस्तुनादिषट्कं दक्षिणः। अथ शरक्रान्त्योरेकदिक्त्वेन क्रान्तिः कलाद्या कलात्मकनिक्षेपेण युता तयोर्दिगन्यत्वे क्रान्तिध्विक्षेपेण वियुताऽन्तरिता शेषदिक्का स्पष्टा क्रान्तिः स्यात्। ननु सूर्य्यस्य विक्षेपाभावात् कथं स्पष्टा क्रान्तिर्ज्ञेयत्यत आह भास्करस्येति। सूर्य्यस्य यथागता पूर्वागता क्रान्तिरेव स्पष्टा क्रान्तिः। अत्रोपपत्तिः। विषुबद्वृत्ताद्ग्रहविम्बकेन्द्रपर्य्यन्तं याम्यमुत्तरं वान्तरं स्पष्टक्रान्तिरिति तयोरेकदिक्त्वे तद्योगतुल्यमन्तरं, भिमूदिक्त्वे तदन्तरमितनन्तरमिति। अत्र शरस्य क्रान्तिसंस्कारयोग्यत्वसम्पादिका क्रिया लोकश्रमभयात् स्वल्पान्तरत्वाच्चोपेक्षिता भगवता कृपावता। अन्यथा शरस्य ध्रुवाभिमुखत्वे भगवदुक्तमायनदृक्कर्म्म कथमव्याहतं स्यादित्यलम्।

**क्रान्तिज्या** स्त्री० क्रान्तिवृत्तक्षेत्रस्थे सिद्धान्तशिरोमणौ उक्ते अक्षक्षेत्रावयवभेदे। तन्मानानयनम्। ''युक्तायनांशादपमः प्रसाध्यः कालौ च खेटात् खलु भुक्तभोग्यौ। जिनांशमौर्व्या १३९७ गुणितार्कदोर्ज्या त्रिज्यो ३४३८ द्धृता क्रान्तिगुणोऽस्य वर्गम्। त्रिज्या कृतेः ११८१९८४४ प्रोह्य पदं द्युजीवा क्रान्तिर्भवेत् क्रान्तिगुणस्य चापम्। अक्षप्रभासंगुणितापमज्या तद्द्वादशांशो भवति क्षितिज्या।''(सि शि०)

अत्र खेटादित्युपलक्षणम्। यस्मात् खेटाल्लग्नाद्वाऽपमः साव्यस्तस्मात् सायनांशादेव। तथा यस्मादुदयसम्बन्धिनौ भुक्तभोग्यकालौ साध्यौ तस्मादपि सायनांशादेव। सायनार्कस्य दोर्ज्या जिनभागज्यया गुणिता त्रिज्यया भक्ता क्रान्तिज्या स्यादित्यादि स्पष्टार्थम्।

अस्योपपत्तिः। विषुवत्क्रान्तिवृत्तयोर्याम्योत्तरमन्तरं क्रान्तिः। तयोः संपाते क्रान्त्य-भावः। ततस्त्रिभेऽन्तरे परमा जिन २४ तुल्यभागाः। अतस्तसंपातादारभ्य क्रान्तिः साध्या। उदयाच्च तत एव। स तु संपातो मेषादेः प्रागयनांशतुल्येऽन्तरे। अतः सायनांशात् खेटात् क्रान्तिर्भुक्तभोग्यकालौ चेत्युक्तम्। यदि त्रिज्यातुल्यया भुजज्यया जिनांशज्यातुल्या क्रान्तिज्या लभ्यते तदष्टज्यया किमिति। फलं क्रान्तिज्या भुजस्त्रिज्या कर्णस्तद्वार्गान्तरपदमहोरात्रवृत्तव्यासार्धम्। सैव द्युज्या।

देशभेदे कालभेदेन रवेः क्रान्तिज्याज्ञानार्थं प्रश्नपूर्वकं सिद्धान्तशिरोमणौ निर्णीतं यथा – ''मार्तण्डः सममण्डलं किल यदा दृष्टः प्रविष्टः सखे। काले पञ्चघटीमिते दिनगते यद्वा नते तावति। केनाप्युज्जयिनीगतेन तरणेः क्रान्तिं तदा वेत्सि चेन्मन्ये त्वां निशितं सगर्वगणकोन्मत्तेभकुम्भाङ्कुशम्।''(सि शि०)

हे गणक। केनचित् किलोज्जयिनीगतेन यदा दिनगते पञ्चघटीमिते काले मार्तण्डः सममण्डलं प्रविष्टो दृष्टस्तदा कियती क्रान्तिज्येत्येकः प्रश्नः। अथान्यः तावति पञ्चघटीमिते नते वा काले समण्डलं प्रविष्टो दृष्टस्तदा च या क्रान्तिज्या तां त्वं चेद्वेत्सि तदा सगर्वगणकोन्मत्तेभकुम्भाङ्कुशं निशाणोद्धृतं त्वामहं मन्ये। ''या स्याद्वेरुन्नतकालजीवाभीष्टा हृतिः सा प्रथमं प्रकल्प्या। अर्का१२ क्षभाघातहताक्ष–कर्णकृत्याद्धृता स्यादपमज्यकाऽस्याः। चरादिकेनेष्टहृतिः प्रसाध्या क्षुण्णस्तया क्रान्तिगुणोऽसकृच्च। तदाद्यहृत्या विहृतः स्फुटः स्यात् सहस्ररश्मौ सममण्डलस्थे।'' (सि शि०)

रवेः समण्डलप्रवेशे य उन्नतकाल उद्दिष्टस्तस्य जीवा सा तावत् प्रथममिष्टहृतिः कल्प्या। ततो द्वादशगुण्याः क्षया गुण्या पलकणवर्गेण भाज्या। सा किल स्थूला क्रान्तिज्या भवति। तस्याः क्रान्तिज्याया द्युज्यां कुज्यां चरज्यां चरं च कृत्वा अथोन्नतादूनयुताच्चरेणात्यादिनेटहृतिः साध्या। तया पूर्वमागता क्रान्तिज्या गुण्या। आद्यहृत्या कल्पितया भाज्या। फलं स्फुटासन्ना क्रान्तिज्या भवति। अत्रोपपत्तिः। अत्रोन्नतवालजीवातुल्या प्रथमं तद्धृति कल्पिता। तस्या अनुपातेन शङ्कुः। यदि पलकर्णेन द्वादशकोटिस्तदा तद्धृतिकर्णेन किमिति। अत्र तद्धृतेर्द्वादशगुणाः पलकर्णो हरः। फलं सममण्लशङ्कुः। पुनरन्योऽनुपातः। यदि पलकर्णोनाक्षमा भुजो लभ्यते तदा सममण्डलशङ्कुतुल्येन कर्णेन किमिति। फलं क्रान्तिज्या स्थूला। अस्याः क्रान्तिज्यायाश्चरादिकेन अथोन्नतादूनयुताच्चरेण इत्यादिनेष्टहृतिः साध्या। तां तद्धृतिं प्रकल्प्य पुनः क्रान्तिज्या साध्या। एवमसकृद्यावदविशेषः। तत्रासकृत्कर्मणि त्रैराशिकेन क्रियोपसंहारः कृतः। यदि कल्पितया हृत्येयं क्रान्तिज्या लभ्यते तदेदानीमानीतया किमिति। एवं क्रान्तिज्या स्फुटा स्यादियुपपन्नम्।

**क्रान्तिपात** पु० क्रान्त्यर्थं पातः विषुवत्क्रान्तिवलययोः अश्रुघातादिवत् चतुर्थ्यर्थे। क्रान्तिनिमित्ते विषुवत्क्रान्तिवृत्तयोः संपाते। ''विषुवत्क्रान्तिवलययोः संपातः क्रान्तिपातः स्यात्।''(सि शि०)

**क्रान्तिवृत्त** न० क्रान्तिवलयाकारे वृत्तक्षेत्रे। तन्निवेशनप्रकारादि उक्तं यथा – ''याम्योत्तरक्षितिजवत् सुदृढं विदध्यादाधारवृत्तयुगलं ध्रुवयष्टिबद्धम्। षष्ट्यङ्कमत्र सममण्ड–लवत् तृतीयं नाड्याह्वयं च विषुवद्वलयं तदेव।''(सि शि०) यथा खगोले क्षितिजं याम्योत्तरं च तदाकारमपरमाधारवृत्तद्वयं ध्रुवयष्टस्थं कृत्वा तदुपर्यन्यत् यतोयं सममण्डलाकारं घटीषष्ट्या चाङ्कितं कार्यम्। तन्नाडीवृत्तं विषुवद्वृत्तसंज्ञं च इदानीं क्रान्तिवृत्तमाह। ''क्रान्तिवृत्तं विधेयं गृहाङ्कं भ्रमत्यत्र भानुश्च भार्धे कुभा भानुतः। क्रान्तिपातः प्रतीपं तथा प्रस्फुटाः क्षेयपाताश्च तत्स्थानकान्यङ्कयेत्।'' अथान्यत् तत्प्रमाणमेव वृत्तं कृत्वा तत्र मेषादिं प्रकल्प्य द्वादशराशयोऽङ्क्याः। तत् क्रान्तिवृत्तसंज्ञम्। तस्मिन् वृत्ते रविर्भ्रमति। तथा रवेर्भार्धान्तरे भूभा च। तथा तत्र क्रान्तिपातो मेषादेर्विलोमं भ्रमति। तथा ग्रहाणां विक्षेपपाताः प्रस्पुटा विलोमं भ्रमन्ति। अतः क्रान्तिपातादीनां स्थानानि तत्राङ्क्यानि।




इदानीं क्रान्तिवृत्तस्य निवेशनमाह – ''क्रान्तिपाते च पाताद्भषट्कान्तरे नाडिकावृत्तलग्नं विदध्यादिदम्। पाततः प्राक् त्रिभे सिद्धभागैरुदग्दक्षिणे तैश्च भागैर्विभागेऽपरे।''(सि शि०) क्रान्तिपातचिह्नात् षड्भेऽन्तरेऽन्यच्चिह्नं कार्यम्। ते चिह्ने नाडीवृत्तेन संसक्ते कृत्वा पातचिह्नादग्रतस्त्रिभेऽन्तरे नाडीवृत्ताद्भागचतुर्विंशत्योत्तरतो यथा भवत्यपरविभागे त्रिभेऽन्तरे दक्षिणतश्च, तैर्भागैर्यथा भवति तथा बध्नीयात्।

**क्रान्तिसाम्य** न० ग्रहाणां तुल्यक्रान्तौ। यद्यपि सर्व ग्रहाणां क्रान्तिसाम्यस्य तथापि चन्द्रार्कयोः क्रान्तिसाम्यस्य मङ्गलकार्य्ये वर्ज्जनीयता। ''क्रान्तिसाम्ये च ग्रहाणामवनत्यभावः''। सूर्यसिद्धान्ते दर्शितोयथा ''अक्षोदग्मध्यमक्रान्तिसाम्ये नावनतेरपि।'' अक्षाणां उत्तरा ये मध्यमस्य मध्यलग्नस्य क्रान्त्यंशाः। अत्र मध्यलग्नशब्देन दशमभावस्त्रिभोगलग्नं वा ग्राह्यमुभयपक्षेऽप्यदोषः। अनयोस्तुल्य-त्वेऽवनतेर्नतेः अपिशब्दाद् सम्भवो न प्रभावः इत्यर्थः।''

**क्रान्तिसूत्र** न० सिद्धान्तशिरोमणौ उक्ते ध्रुवस्पर्शिनि क्रान्तीनां सूत्राकारे योगभेदे। ''सर्व्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः। विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा।''

**क्रिय** पु० क्रिया ग्रहाणामाद्यनतिक्रिया विद्यतेऽत्र अत्र।

**क्षय** पु० निवासगत्यार्वा भावादो यथायथम्। ज्योतिषोक्ते द्विसंक्रान्तियुक्ते शुक्लप्रतिपदाद्यमावस्यान्ते चान्द्रे मासे यथाह -''असंक्रान्तिमासोऽधिमासः स्फुटं स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित्। क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽधिमासद्वयं च।''(सि शि०)

यस्मिन् शशिमासेऽर्कसंक्रान्तिर्नास्ति सोऽधिमास इति प्रसिद्धम्। तथा यत्र मासे संक्रान्तिद्वयं भवति स क्षयमासो ज्ञेयः। यतः संक्रान्त्युपलक्षिता मासाः। अत एकस्मिन् मासे संक्रान्तिद्वये जाते सति मासयुगलं जातम्। स क्षयमासः कदाचित् कालान्तरे भवति। यदा भवति तदा कार्त्तिकादित्रय एव। तदा क्षयमासात् पूर्वं मासत्रयान्तर एकोऽधिमासोऽग्रतश्च मासत्रयान्तरितोऽन्यश्चासंक्रान्तिमासः स्यात्। अत्रोपपत्तिः। चन्द्रमासप्रमाणमेकोनत्रिंशत् सावनदिनान्येकत्रिंशत् घटिकाः पञ्चाशत् पलानि २९।३१।५०। तथार्कमासन्त्रिंशद्दिनानि षड्विंशतिर्घटिकाः सप्तदशपलानि ३०। २६। १७। एतावद्भिर्दिवसैरविर्मध्यगत्याराशिं गच्छति। यदार्कगतिरेकषष्टिः कनास्तदा सार्धैकोनत्रियंशता दिनै २९। ३० राशिं गच्छति। अतश्चान्द्रमासादल्पोऽ-र्कमासस्तदा स्यात्। एवं रविमासस्य परमाल्पता २९। २०। ४०। सा चैकषष्टिर्गतिर्वृश्चिकादित्रयेऽर्कस्य। स ईदृशोऽल्पोऽर्कमासो यदा चन्द्रमास-स्यानल्पस्यान्तः पाती भवति तदैकस्मिन् मासे संक्रमणद्वयमुपपद्यते। अत उक्तं

क्षयः कार्त्तिकादित्रय इति। पूर्वं किल भाद्रपदेऽर्कसंक्रान्तिर्जाता ततोऽर्कगते-रधिकत्वान्मार्गशीर्षो द्विसंक्रान्तिः। ततः पुनर्गतेरल्पत्वाच्चैत्रोऽप्यसंक्रान्तिर्भवति। ततो वर्षमध्येऽधिमासद्वयमित्युपपन्नम्।

**क्षारसमुद्र** पु० क्षारप्रधानः समुद्रः। ''भूमेरर्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्यः। अर्द्धोऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः।'' (सि शि०)

**क्षितिज** पु० क्षितेर्जायत। मङ्गले। भूमिजाते त्रि०। सिद्धान्तशिरोमणौ गोलबन्धा-धिकारोक्ते वृत्तक्षेत्रभेदे यथा– ''पूर्वापरं विरचयेत् सममण्डलाख्यं याम्योत्तरं च विदिशोर्वलयद्वयं च। ऊर्ध्वाध एवमिह वृत्तचतुष्क्रमेतदावेष्ट्य तिर्यगपरं क्षितिजं तदर्धे।''

एकं पर्वापरमन्यद्याम्योत्तरं तथा कोणवृत्तद्वयमेवं वृत्तचतुष्टयमूर्द्धाधोरुप-मावेष्ट्य तदर्द्धे वृत्तं क्षितिजाख्यं निवेशयेत्। अत्र याम्योत्तरवृत्त उत्तरक्षितिजादुपरि पलांशान्तर एकं ध्रुवचिह्नं कार्य्यम्। दक्षिणक्षितिजादधोऽन्यत्। ''पूर्वापरक्षितिज-संगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चाक्षलवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि।''

समवृत्तक्षितिजयोर्यौ पूर्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च सक्तं यन्निबध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवतः।

**क्षेत्र** न० लीलावत्यादि प्रसिद्धे त्रिकोणचतुष्कोणादिके पदार्थे। तादृशक्षेत्रभेदाश्च रेखाभेदसाध्या अतो रेखाभेदसंज्ञा निरूप्यते।

१. यः पदार्थोलक्षयितुं शक्यः परिमाणस्थूलत्वदैर्घ्यविस्ताररहितः स विन्दुः। (विन्दुसमुदायोरेखा)

२. यः पदार्थोदीर्घो विस्तारस्थूलत्वाभ्यां रहितः स रेखा।

३. यः पदार्थोविस्तारदैर्घ्ययुक्तः स्थूलत्वरहितः स धरातलम्।

४. यः पदार्थोविस्तारदैर्घ्यस्थौल्पयुक्तः सः स्थूलपदार्थः।

५. रेखा च त्रिविधा सरला वक्रा मिश्रिता च।

६. तत्र या रेखा एकदिग्गमनेनैव चिह्नद्वयान्तराले तिष्ठति एवं ययोश्चिह्नयोरन्तराले कृतास्यनेकरेखास्वतिशयेनाल्पतमा सा सरला। यत्र रेखाशब्दस्तत्र सरलैः ग्राह्या।

७. या रेखा वर्द्धनेन प्रतिचिह्नं दिगन्तरे गच्छति सा वक्रा। (उभयलक्षणान्विता मिश्रिता)

८. रेखा च समानान्तरा विषमान्तरा लम्बः सम्पातरेखा च।

९. ययोः रेखयोरन्तरं समानम् एवं बह्ननेन तयोर्योगा कदापि न भवितुमर्हति सा समानान्तरा रेखा भवति।

१०. ययोरन्तरं विषमम् एवं यद्दिश्यल्पान्तरं तद्दिशि वर्द्धने नोत्तरोत्तरमल्पान्तरं यावद्रेखायोगस्तदनन्तरमुत्तरोत्तररमल्पान्तरं विवर्द्धतेयोगश्च कदापि भवितुं न शक्नोति सा विषमान्तरा।

११. एकरेखायामन्यरेखासंयोगादुत्पन्नो कोणौ यदि समानौ भवतस्तदा ते रेखे मिथोलम्बरूपे भवतः।

१२. या रेखा वृत्तपालिमिलिता सती पालिखण्डं न करोति सा सम्पातरेखा भवति। यदृत्तं वृत्तसम्पातेन खण्डितं न भवति स वृत्तसम्पातः।

१३. एकचिह्नान्निःसृते द्वे रेखे यदि सम्मुखेतरभिन्नदिग्गते भवतस्तदा तच्चिह्ने कोणोभवति।

१४. कोणस्त्रिविधः समकोणोऽल्पकोणोऽधिककोणश्च।

१५. तत्र समानरेखायां लम्बयोगादुत्पन्नः कोणः समकोणः।

१६. समातिरिक्तोविषमकोणोभवति।

१७. समकोणान्यूनोऽल्पकोणोभवति।

१८. समकोणादधिकोऽधिककोणो भवति।

१९. धरातलं द्विविधं समं वर्त्तुलं च।

२०. तत्र यस्मिन्धरातले सरला रेखा सर्वतो भावेन संलग्ना भवति यद्वा यत्र कुत्रापि चिह्नद्वये लग्ना सरला रेखा सवेतः स्पृशति तद्धरातलं समं ज्ञेयम्। समातिरिक्तं विषममिति।

२१. सरलरेखाभिः कुटिलरेखाभिर्वा निवद्धसीमं धरातलं समधरातलक्षेत्रं भवति। यत्र क्षेत्रशब्दस्तत्र समधरातलक्षेत्रं ज्ञेयम्।

२२. सरलरेखानिबद्धसीमं धरातलकं क्षेत्रं भुजैः कोणैर्वाऽभिधेयं भवति किन्तु यावन्तोभुजास्तावन्त एव कोणाः भवति।

२३. त्रिभिर्भुजैर्निवद्धसीमं धरातलं त्रिभुजक्षेत्रम्।

२४. यस्य त्रयोबाहवः समानास्तत्समस्त्रिभुजं भवति।

२५. यस्य द्वौ बाहू समानौ तत्समद्विभुजं ज्ञेयम्।

२६. यस्य त्रयोबाहवोविषमास्तद्विषमत्रिभुजं भवति।

२७. यस्यैकः समकोणस्तत्समकोणत्रिभुजं ज्ञेयम्।

२८. समातिरिक्तकोणं विषमत्रिभुजं भवति।

२९. यस्यैकोऽधिककोणस्तदधिककोणत्रिभुजं भवति।

३०. यस्य त्रोयोऽपिन्यूनकोणास्तन्न्यूनकोणत्रिभुजं ज्ञातव्यम्।

३१. चतुर्भुजैर्निबद्धसीमं धरातलं चतुर्भुजक्षेत्रं भवति।

३२. यस्य चतुर्भुजस्य परस्परं सम्मुखो भुजौ समान्तरौ भवतस्तत्समानान्तरभुज चतुर्भुजं क्षेत्रं भवति। तद्वक्ष्यमाणाभिधानं चतुर्विधं तद्यथा।

३३. यस्य चतुर्भुजस्य परम्परसम्मुखौ भुजौ समानौ एवमेकः समकोणश्च भवति तच्चतुर्भुजं समकोणायतं भवति।

३४. यस्य चत्वारोभुजा मिथसमानाः कोणाश्च समास्तच्चतुर्भुजं समकोणसमचतुर्भुजं वर्ग्गक्षेत्रं वा भवति।

३५. यस्य परस्परं सम्मुखरेखाद्वयं समानं समानान्तरं च भवति। कोणाश्च विषमास्तच्चतुर्भुजं विषमकोणायतम्।

३६. यस्य चत्वारोबाहवः समानाः समानान्तराश्च भवन्ति कोणाश्च विषमास्तद्विषमकोणसमचतुर्भुजं भवति।

३७. यस्य च परस्परं सम्मुखौ भुजौ विषमान्तरौ तच्चतुर्भुजं विषमचतुर्भुजं भवति।

३८. यस्य भुजद्वयं समानान्तरं तत्समानान्तरविषमचतुर्भुजम्।

३९. चतुर्भुजस्यैकान्तरकोणसंलग्ना रेखा कर्णोभवति।

४०. चतुर्भुजादधिकभुजैर्निबद्धं धरातलं सामान्यतोबहुभुजं क्षेत्रं तद्बहुविधं भुजानुसारेण कोणानुसारेण वा तेषां नामानि।

४१. यथा पञ्चभुजं षड्भुजं सप्तभुजमष्टभुजं नवभुजं दशभुजमेकादशभुजं द्वादशभुजमित्यादीनि।

४२. तत्र बहुभुजक्षेत्रं यदि समभुजं भवति तस्य कोणा समानाभवन्ति तदा यत्क्षेत्रं समपञ्चभुजमित्याभिधानकं भवति तदितरत् विषमपञ्चभुजमित्यादि।

४३. एवमेव समत्रिभुजे कोणाः समानाभवन्त्येवेति नियमः। तत्त्रिभुजं समान-कोणसमत्रिभुजं भवति। यस्य चत्वारो भुजाः समानाः सन्ति तत्समचतुर्भुजं क्षेत्रं भवति।

४४. यस्य क्षेत्रस्य भुजाः समानाभवन्ति तत् क्षेत्रं समभुजं यस्य कोणाः समानास्तत्समानकोणं क्षेत्रम्। यस्य भुजाः कोणाश्च समानाभवन्ति तत्क्षेत्रं समकोणसमभुजं भवति।

४५. कुटिलरेखया निवद्धसीमं धरातलं वृत्तक्षेत्रं भवति सा रेखा परिधिसंज्ञका वा भवति तस्या मध्यबिन्दुः केन्द्रसंज्ञकोभवति।

४६. केन्द्रान्निःसृता वृत्तपालिसंलग्ना रेखा व्यासार्द्धं भवति।

४७. या रेखा उभयतः पालिसंलग्ना केन्द्रगा च भवति सा व्याससंज्ञिका भवति।

४८. परिधिखण्डश्चापसंज्ञकोभवति।

४९. चापोभयप्रान्तगां रेखा चापकर्णसंज्ञिका ज्यासंज्ञिका च।

५०. जीवाचापाभ्यां निबद्धधरातलकं क्षेत्रं धनुःक्षेत्रं चापक्षेत्रं वा भवति।

५१. यस्य चापस्य व्यासरेखा जीवा भवति तत् अर्द्धवृत्तम्।

५२. केन्द्रान्निःसृते द्वे रेखे चापोभयवात्तसंलग्ने यदि भवतस्तदा तत्क्षेत्रं वृत्तांशसंज्ञकं वृत्तखण्डकं च भवति।

५३. यस्य चापः परिधिपादमितः केन्द्रान्निःसृताभ्यां रेखाभ्यां समकोणश्च भवति तद्वृत्तपादक्षेत्रं भवति।

५४. क्षेत्रत्योर्द्धकोणादाधाररेखायां पतितलम्बमितमौच्च्यम्।

५५. समकोणत्रिभुजे समकोणसम्मुखभुजः कर्णोभवत्यन्यौ पादौ भवतः किं वैक आधारोऽन्योलम्बः।

५६. अत्र कोणोपलब्धिः कल्पितत्रिभिर्वर्णैर्भवति किन्तु सदैव कोणसंलग्नोवर्णोमध्य उच्चारणीयः।

५७. परिधेः षष्ट्यधिकशतत्रयांशोंऽगसंज्ञकोभवति। अंशस्य षष्ट्यंशः कला। कलायाः षष्ट्यंशोविकला। विकलायाः षष्ट्यंशः प्रतिविकलेत्यादि।

५८. कोणस्य परिमितिः कोणचिह्नकृतकेन्द्रात् कृते वृत्ते तत्कोणाकारक-रेखयोरन्तरालचापगतांशतुल्या भवति सकोणस्तद्वृत्तस्य केन्द्रं भवति।

५९. तेषां चापानां केन्द्रदूरत्वं समानं भवति येषु केन्द्रान्निःसृतोलम्बः समोभति।

६०. येषु दीर्घोलम्बः पतति तेषां दूरत्वं दीर्घं भवति।

६१. चापगतैकचिह्नान्निःसृते द्वे रेखे तदन्यचापोभयप्रान्तमिलिते तदुद्भूतः कोणश्चापान्त-र्गतकोणोभवति।

६२. अनन्तरोक्तकोणादपरादग्भवः कोणस्तत्कोणसत्त्वे चापोपरिस्थः कोणोभवति किन्तु द्वयोः कोणयोः स्वरूपं समानं तयोः प्रथमोऽन्तर्गतोद्वितीय उपरिस्थ इत्येषु भेदः।

६३. यत्कोणचिह्नं परिधिगतं भवति स पालिकोणोभवति यस्य तच्चिह्नं केन्द्रगतं स्यात्स कोणः केन्द्रकोणोभवति।

६४. सरलरेखाकृतक्षेत्रस्य सर्व्वे कोणा यदि वृत्तमध्ये परिधिसंलग्नाभवन्ति तदा तत्क्षेत्रं वृत्तान्तर्गतं क्षेत्रोपरि गतवृत्तं वा भवति।

६५. यदि सरलरेखाकृतक्षेत्रस्य मध्ये सर्व्वभुजसंलग्नः परिधिस्तदा तद्वृत्तं क्षेत्रान्तर्गतं वृत्तोपरिगतक्षेत्रं वा।

६६. सरलरेखाकृतक्षेत्रस्य सर्व्वभुजसंलग्नायदि तद्रूपस्यान्यक्षेत्रस्य सर्व्वे कोणाभवन्ति तदा तत्क्षेत्रं क्षेत्रान्तर्गतं क्षेत्रोपरिगतक्षेत्रं वा भवति।

६७. यद्रेखाया एकांशोवृत्तान्तर्गतोद्वितीयोबहिर्गतः स्यात्सा रेखा वृत्तखण्डिनी भवति।

६८. ययोर्द्वयोस्त्रिभुजयोर्येषां सरलरेखाकृतक्षेत्राणां वा प्रतिदिग्भुजैः प्रतिदिग्भुजाः समानाः सन्ति तानि परस्परं समभुजानि भवन्ति ययोर्येषां वा प्रतिदिक्कोणैः प्रतिदिक्कोणाः समानास्तानि क्षेत्राणि परस्परं समानकोणानि भवन्ति।

६९. उभयोः क्षेत्रयोः परस्परं भुजाः कोणाश्च परस्परं भुजैः कोणैश्च समानाभवन्ति किं वैकस्य क्षेत्रस्य सर्व्वे भुजाः कोणाश्च द्वितीयक्षेत्रस्य सर्व्वैर्भुजैः कोणैश्च परस्परं समानाः। यथा भुजाः कोणाश्च सर्वभुजोपरिकोणोपरि च समानरूपेण पतिताः स्युः यथा द्वेयोरेकरूपं स्यादीदृक्क्षेत्राण्येकरूपाणि भवन्ति।

७०. येषां क्षेत्राणां प्रतिदिक्कोणाः समाना एवं प्रतिदिग्भुजा एकनिष्पत्तियुताभवन्ति तानि क्षेत्राणि सजातीयानि।

७१. क्षेत्रस्याखिलभुजयोगः सीमासूत्रमित्युच्यते। एवं रेखानिष्पन्नक्षेत्राणां भुजकोट्यादिमानफलज्ञानार्थं लीलावत्युक्तः क्षेत्रव्यवहारोऽत्र दर्शयति यथा– भुजकोटिकर्णानामन्यतमाभ्यामन्यतमानयनाय करणसूत्रं वत्तद्वयम्। इष्टोबाहुर्यः स्यात्तत्स्पर्द्धिन्यां दिशीतरोबाहुः। त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः। तत्कृत्योर्य्योगपदं कर्णो दोःकर्णवर्गयोर्विवरात्। मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात्पदं बाहुः।''(लीला०)

**क्षेत्रव्यवहार** पु० लीलावतीप्रदर्शिते त्रिकोणादिक्षेत्रफलादयः।

**क्षेत्रसम्भव** त्रि० क्षेत्रे सम्भवति । क्षेत्रजाते ''क्षेत्रसम्भवफलं घनं भवेत्।'(लीला०) भूमिजातमात्रे त्रि०।

**क्षेप** पु० क्षपे स्वार्थे तत्रार्थे ''भाज्यो हारः क्षेपकश्चापवर्त्त्य''(लीला०)

**क्षेपक** त्रि० क्षिप्यमाणे यथा लीलावत्यां ''पादोनगद्याणकतुल्यटङ्कैर्द्विसप्ततुल्यैः कथितोऽत्र सेरः। मणाभिधानं खुगैश्च सेरैर्धान्यादितौल्येषु तुरुष्कसंज्ञा।''

**ख** पु० सूर्य्ये। क्षेत्रे। आकाशे।

**खकक्षा** स्त्री० सूर्य्यरश्मिप्रचारावधिके वेष्टनाकारे ब्रह्माण्डसुषिरे गगनपरिधौ। सिद्धान्तशिरोमणौ तत्परिमाणमुक्तं यथा ''कोटिघ्नैर्नखनन्दषट्कनखभूभूभृद्भुजङ्गे-न्दुभि १८७१२०६९२००००००००० ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः। तद् ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनम्। केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः। करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम्। दिनकरकरनिकरनिहततमसो नभसः स परिधिरुदितस्तैः।'' एभिर्योजनैस्तुल्यां गणकाः खकक्षामाकाशपरिधिं वदन्ति। तत्र कथमनन्तस्याकाशस्येयत्ता वक्तुं शक्यत इत्याशङ्क्याऽहर्पतिद्युतियुजो नभसः परिधेरिदं वदन्ति। अत एव पौराणिका गणकास्ते ब्रह्माण्डपरिधिं वदन्ति। केचिल्लोकालोकं वदन्ति। यतस्तदन्तर्वर्त्तिन एवार्करश्मयः। एवमन्ये वदन्तीति नास्माकं मतमित्यर्थः प्रमाणशून्यत्वात्। करतलकलितसकल-ब्रह्माण्डगोला एवं वक्तुं शक्नुवन्ति। इदानीं स्वमतमाह प्रमि०। ''ब्रह्माण्डमेतन्मितमस्तु नो वा कल्पे ग्रहः क्रामति योजनानि। यावन्ति पूर्वैरिह तत्प्रमाणं प्रोक्तं स्वकक्षाख्यमिदं मत नः।'' इदानीं ग्रहक्षका आह। ''ग्रहस्य चक्रैर्विहृता खकक्षा भवेत् स्वकक्षा निजकक्षिकायाम्। ग्रहः स्वकक्षामितयोजनानि भ्रमत्यजस्रं परिवर्त्तमानः।'' सा खकक्षा यस्य यस्य भगणैर्ह्रियते तस्य तस्य ग्रहस्य कक्षामितिर्लभ्यते। अस्योपपत्तिरूपं श्लोकस्योत्तरार्धमिति। यतः स्वकक्षायां ग्रहो भ्रमन्नजस्रं परिवर्त्तमानः स्वकक्षामितानि योजनानि पूरयति। अतो ग्रहभगणैः भक्तायाः खकक्षाया यल्लभ्यते सा ग्रहकक्षा-मितिरित्युपपन्नम्।

**खगगति** स्त्री० ग्रहाणां गतौ। तत्र ग्रहभेदे गतिभेदाः सूर्यसिद्धान्ते सकारणम् उक्ता यथा ''अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः। शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः। तद्वातरश्मिभिर्बद्धास्तैः सव्येतरपाणिभिः। प्राक् पश्चादपकृष्यन्ते यथासन्नंस्वदिङ्मुखम्। प्रवहाख्यो मरुत्तांस्तु स्वोच्चाभिमुखमीरयेत्। पूर्वापरापकृष्टास्ते गतिं यान्ति पृथग्विधाम्। ग्रहात् प्राग्भगणार्द्धस्थः प्राङ्मुखं कर्षति ग्रहम्। उच्चसञ्ज्ञोऽ-परार्द्धस्थस्तद्वत् पश्चान्मुखं ग्रहम्। स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहाः। तत् तेषु घनमित्युक्तमृणं पश्चान्मुखेषु तु। दक्षिणोत्तरतोऽप्येवं पातो राहुः स्वरंहसा। विक्षिपत्येष विक्षेपं चन्द्रादीनामपक्रमात्। उत्तराभिमुखं पातो विक्षिपत्यपरार्द्धगः। ग्रहं

प्राग्भगणार्द्धस्थो याम्यायामपकर्षति। बुधभार्गवयोः शीघ्रात् तद्वत् पातो यदा स्थितः। तच्छीघ्राकर्षणात् तौ तु विक्षिप्येते यथोक्तवत्। महत्त्वान्मण्डलस्यार्कः स्वल्पमेवापकृष्यते। मण्डलाल्पतया चन्द्रस्ततो बह्वपकृष्यते। भौमादयोऽल्पमूर्त्तित्वाच्छीघ्रमन्दोच्चसञ्ज्ञकैः। दैवतैरपकृष्यन्ते सुदूरमतिवेगिताः। अतो धनर्णं सुमहत् तेषां गतिवशाद्भवेत्। आकृष्यमाणास्तैरेवं व्योम्नि यान्त्यनिलाहताः। वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा। तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः। तत्रातिशीघ्रा शीघ्राख्या मन्दा मन्दतरा समा। ऋज्वीति पञ्चधा ज्ञेया या वक्रा सानुवक्रगा।''(सू सि०) वक्रानुवक्रेत्यादिकं रङ्गनाथेन विवृतं यथा–

भौमादिग्रहाणां विरविचन्द्राणामष्टप्रकारा गतिः। फलिता। तत्र वक्रेत्यादिसमेत्यन्तं षट्प्रकारा गतिः। शीघ्रतरा शीघ्रेति गतिद्वयम्। अथैनामष्टधा गतिं भेदद्वयेन क्रोडयति। तत्राष्टविधगतिष्वतिशीघ्रेत्यादिसमेत्यन्ता इत्येवं पञ्चधा गतिः। ऋज्वी मार्गी गतिर्ज्ञेया या गतिः सानुवक्रगतेर्वक्रकुटिलमध्याभिधानादुभयथासन्नत्वाच्च वक्रानुवक्रा कुटिलेति गतिर्वक्रा ज्ञेया तथा च ग्रहाणां मार्गो वक्रेति गतिद्वयम्।

**खगवती** स्त्री० खगः खगसादृश्यम् आकाशस्थितित्वेनस्त्यस्याः। तस्याः व्योम्नि स्थितत्वात्। ''मध्ये समन्ताद्दण्डस्य भूगोलः व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्।''(सू सि०) आर्य्यभट्टमते तु पृथिव्याः स्वकक्षायाम् आकाशगतिमत्वात्। खगतुल्यगतित्वेन सादृश्यमित्यर्थः।

**खगोल** पु० सूर्यसिद्धान्ते उक्ते गोलाकारे आकाशस्य परिधौ सूर्य्यकिरणप्रचारयोग्यदेशे ग्रहाद्याधारे वाय्वंशभेदे। यथा– ''ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम्। कटाहद्वितयस्यैव सम्पुटं गोलकाकृतिः।'' एतत् प्रागुक्तं ब्रह्मणाधिष्ठितं सुवर्णाण्डं सुषिरमवकाशात्मकं, तत्रावकाश इदं जगत् भूर्भुवःस्वर्गात्मकमास्थितं न बहिः। नन्वण्डस्य गोलाकारत्व नान्तरवकाशात्मकत्वं न सम्भवतो धन आह कटाहद्वितयस्योति। कटाहोऽर्धगोलाकारं सावकाश पात्रं तत्र द्वितयं हयं तस्य खनम् । एवकारो न्यूनाधिकव्यवच्छेदार्थः। सम्पुटमाभिमुख्येन मिलितं गोलकाकृतिर्गोलाकारः स्यात् । तथा च न क्षतिः। अथ ब्रह्माण्डान्तः परिधिं वदंस्त–

दन्तर्भग्रहादिकमाकाशे यथास्थानं परिभ्रमतीति श्लोकाभ्यामाह। ''ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते। तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा। मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः।'' ब्रह्माण्डान्तः परिधिस्तुल्यवृत्तमाना व्योमकक्षा वक्ष्यमाणाकाशकक्षोच्यते। तन्मध्ये ब्रह्माण्डमध्य आकाशे भानां नक्षत्राणां सर्वेषां सर्वतस्तुल्योर्ध्वान्तरितानां भ्रमणं भवति। तथा तुल्योर्ध्वान्तरेणाधो नक्षत्रेभ्योऽधोधः क्रमात् शनिबृहस्पतिभौमार्क-शुक्रबुधचन्द्रा अधस्तात् परिभ्रमन्ति। सिद्धा विद्याधराश्चाधख्याश्चन्द्रादधः स्थिता अधोऽधः क्रमेणाकाशे स्थिताः। एषां प्रवहवायाववस्थानामावाच्चन्द्रादिवन्न परिभ्रमः। अथ भूम्यवस्थानमाह ''मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति। विभ्रणाः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्।'' अण्डस्य ब्रह्माण्डस्य समन्तात् सर्वप्रदेशान्मध्ये मध्यस्थाने केन्द्ररूपे आकाशे भूगोलस्तिष्ठति। नन्वाकाशे निराधारवस्तुनोऽवस्थः नासम्भवात् कथमवस्थितो भूमिगोल इत्यतो भूगोलविशेषणमाह विभ्राण इति। ब्रह्मणः परमां शक्तिं धारणात्मिकां निराधारावस्थानरूपां विभ्राणो धारयन्। तथा च न क्षतिः। एतेन भूः किमाकारा किमाश्रयेति प्रश्नद्वयमुत्तरितम्। अथ कथं चात्र सप्त पातालभूमय इति प्रश्नस्योत्तरमाह ''तदन्तरपुटाः सप्त नागासुरसमाश्रयाः। दिव्यौषधिरसोपेता रम्याः पातालभूमयः।'' मेर्व्वादिस्थितिमाह ''अनेकरत्ननिचयो जाम्बूनदमयो गिरिः। भूगोलमध्यगो मेरुरुभयत्र विनिर्गतः। उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा महर्षयः। अधस्तादसुरास्तद्वद् द्विषन्तोऽन्योऽन्यसाश्रिताः। ततः समन्तात् परिधिः क्रमेणायं महार्णवः। मेखलेव स्थितो धात्र्या देवासुरविभागकृत्। समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादि नगर्यो देवनिर्मिताः। भूवृत्तपादे (१२५६) पूर्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी। पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता। उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्त्तिता। तस्यां सिद्धा महात्मनो निवसन्ति गतव्यथाः। भूवृत्तपादविवरास्ताश्चान्योन्यं प्रतिष्ठिताः। ताभ्यश्चोत्तरगो मेरुस्तावानेव १२५६ सुराश्रयः। तासामुपरिगो याति विषुवस्थे दिवाकरः। न तासु विषुवच्छाया नाक्षस्योन्नतिरिष्यते। मेरोरुभयतो मध्ये ध्रुवतारे नभः स्थिते। निरक्षदेशसंस्थानामुभये क्षितिजाश्रये। अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः। नवतिर्लम्बकांशास्तु

मेरावक्षांशकास्तथा। मेषादौ देवभागस्थे देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः। अत्यासन्नतया तेन ग्रीष्मे तीव्राकरा रवेः। देवभागे सुराणां तु हेमन्ते मन्दतान्यथा। देवासुरा विषुवति क्षितिजस्थं दिवाकरम्। पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षये। मेषादावुदितः सूर्यस्त्रीन् राशीनुदगुत्तरम्। सरञ्जरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम्। कर्कादीन् सञ्चरंस्तद्वदह्नः पश्चार्धमेव सः। तुलादींस्त्रीन्मृगादींश्च तद्वदेवासुरद्विषाम्। अतो दिनक्षपे तेषामन्योन्यं हि विपर्ययात्। अहोरात्रप्रमाणं च भानोर्भगणपूरणात्। दिनक्षपार्धमेतेषामयनान्ते विपर्ययात्। उपर्यात्मानमन्योन्यं कल्प-यन्ति सुरासुराः। अन्येऽपि समसूत्रस्था मन्यन्तेऽधः परस्परम्। भद्राश्वकेतुमालस्था लङ्कासिद्धपुराश्रिताः। सर्वत्रैवं महीगोले स्वस्थानमुपरिस्थितम्। मन्यन्ते खे यतो गोलस्तस्यकोर्ध्वं क्व वाप्यधः। अल्पकायतया लोकाः स्वस्थानात् सर्वतोमुखम्। पश्यन्ति वृत्तामप्येतां चक्राकारां वसुन्धराम्। सव्यं भ्रमति देवानामपसव्यं सुरद्विषाम्। उपरिष्टाद्भगोलोऽयं व्यक्षे पश्चान्मुखः सदा।''

**खचर** पु० सूर्य्ये।

**खात** न० खनने। खातवेतनादिदानार्घं क्षेत्रफलज्ञानोपयोगी खातव्यवहारे।

**खेचर** पु० खे चरति सूर्य्यादिग्रहे। मेषादिराशौ पु०।

**खेऽट पु० खेऽटति । सूर्य्यादिग्रहे।**

**गगनगति पु० गगने गतिर्यस्य। ।सूर्य्यादिग्रहे। आकाशगामिनि त्रि०। आकाशे गतौ स्त्री।**

**गजच्छाया स्त्री० ''यदेन्दु पितृदैवत्ये सूर्यश्चैवकरे स्थितः। याम्या तिथिर्भवेत् सा हि गजच्छायेति कीर्त्तिता।'' ''कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः। यदा तदा गजच्छाया''। ''सैहि यो यदा भानुं ग्रसते पर्वसन्धिषु। गजच्छाया तु सा प्रोक्ता''। वराहोक्ते सूर्य्यग्रहणकाले।**

**गगनाध्वग पु० गगनाध्वना आकाशमार्गेण गच्छति । सूर्य्ये ।**

**गणक त्रि० सङ्ख्याकारे, सांवत्सरिके । ''शुचिर्दक्षः प्रगल्भो वाग्मी प्रतिभावान् देशकालवित् सात्त्विको न पर्षत्भीरुः सहाध्यायिभिरनभिभवनीयः कुशलोऽव्यसनी**

शान्तिकपौष्टिकाभिचारस्नानविद्याभिज्ञो विबुधार्चनव्रतोपवासनिरतः स्वतन्त्राश्चर्यो– त्वादितज्ञानप्रभावः पृष्टाभिधाय्यन्यत्र दैवात्ययाद्ग्रहगणितसंहिताहोराग्रन्थार्थवेत्ता।'' (बृ स०)तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु युगवर्षायनर्तुमासपक्षाहोरात्रयाममुहूर्तनाडीविनाडीप्राणत्रुट्यवयवाद्यस्य कालस्य क्षेत्रस्य च वेत्ता। चतुर्णां च मासानां सौरसावननाक्षत्रचन्द्राणामधिमासकावमसम्भ– वस्य च कारणाभिज्ञः। षष्ट्यब्दयुगवर्षमासदिनाहोरात्रपतीनां प्रतिपत्तिविच्छेदवित्। सौरादीनाञ्च मानानां सदृशासदृशयोग्यायोग्यत्व प्रतिपातनपटुः । सिद्धान्त– भेदेऽप्ययननिवृत्तौ प्रत्यक्षं सममण्डलरेखासम्प्रयोगाभ्युदितांशकानाञ्च छायाजल– यन्त्रदृग्गणितसाम्येन प्रतिपादितकुशलः । सूर्य्यादीनाञ्च ग्रहाणां शीघ्रमन्दयाम्योत्तर नीचोच्चगतिकारणभिज्ञः। सूर्य्यचन्द्रमसोच्च ग्रहणे ग्रहणादिमोक्षकालदिक्प्रमाणस्थिति विमर्दवर्णदेशानाम् अनागतग्रहसमागमयुद्धानामादेष्टा । प्रत्येकग्रहभ्रमणयोजन– कक्षाप्रमाण प्रतिविषययोजनपरिच्छेदकुशलो। भूभगणभ्रमणसंस्थानाद्यक्षावलम्बका– हर्व्यासिचरदल कालराश्युदयच्छायानाडीकरणप्रभृतिषु क्षेत्रकालकरणेष्वभिज्ञो नानाचोद्यप्रश्नभेदोपलब्धि जनितवाक्सारो निकषसन्तापाभिनिवेशैर्विशुद्धस्य कनकस्येवाधिकतरममलीकृतस्य शास्त्रस्य वक्ता तन्त्रज्ञो भवति''। ज्योतिःशास्त्रस्य अध्ययने द्विजातिमात्रस्यैव अधिकारं प्रतिपाद्य तद्वेत्तुर्गणकस्य प्रशंसा दर्शिता यथा – ''त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमाच्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः । भूधिष्ण्यं ग्रहसंस्थितेच्च कथनं यन्त्रादि यत्रोच्यते। सिद्धान्तः स उदाहृतोत्र गणितस्कन्धप्रबन्धे बुधैः।। जानन् जातकसंहिताः सगणितस्कन्धैकदेशा अपि ज्योतिःशास्त्रविचारसारचतुरः प्रश्नेष्वकिञ्चित्करः। यः सिद्धान्तमनन्तयुक्तिविततं नो वेत्ति भित्तौ यथा राजा चित्रमयोऽथवा सुघटितः काष्ठस्य कण्ठीरवः।। गर्जत्कुञ्जरवर्जिता नृपचमूरप्यूर्जिताऽश्वादिकैरुद्यानं च्युतचूतवृक्षमथवा पाथोविहीनं सरः। योषित् प्रोषितनूतनप्रियतमा यद्वन्नभात्युच्चकैर्ज्योतिःशास्त्रमिदं तथैव विबुधाः सिद्धान्तहीनं जगुः।''(सि शि०)

**गणित** न० गणने। ग्रहाणां गतिस्थित्यादिगणने। कृतगणने संख्याते अमरः। ''द्विविधगणितमुक्तं व्यक्तमव्यक्तयुक्तं तदवगमननिष्ठः शब्दशास्त्रे पटिष्ठः। यदि भवति

तदेदं ज्यौतिषं भूरिभेदं प्रपठितुमधिकारी सोऽन्यथा नामधारी।(सि शि०) ''सूर्योन्मितश्च गणितं वद तत्र किं स्यात्।''(लीला०)

**गणिताध्याय** पु० गणितं ग्रहगतिस्थित्यादिगणनमधीयतेऽत्र।

**गण्डान्त** न० ''नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम्। नवपञ्चचतुर्थानां ह्येकार्थघटिकामितम्''।। ज्योतिषशास्त्रे तिथिनक्षत्रादीनां सन्धिसमयभेदे।

**गत** त्रि० अतीते। ''आयुषोऽर्धं गतं तस्य।''(सू सि०)

**गद्याण** पु० परिमाणभेदे। ''यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते। माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् । चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च। गद्याणो माषकैः षड्भिः कर्मः स्याद्दशमाषिकः''।। ''तुल्या यवाभ्यां कथितात्र गुञ्जा वल्लस्त्रिगुञ्जो धरणञ्च तेऽष्टौ। गद्याणकस्तद्द्वयमिन्द्रतुल्यैर्वल्लैस्तथैको घटकः प्रदिष्टः।''(लीला०)

**गुञ्जा** स्त्री० परिमाणभेदे। ''तुल्या यवाभ्यां कथितात्र गुञ्जा।''(लीला०)

**गुणक** पु० गुणयति आवर्तयति। गुणनकारके। ''गुण्यान्त्यमङ्कं गुणकेन हन्यात्। उत्सारितेनैवमुपान्तिमादीन्।''(लीला०)

**गुणित** त्रि० आहते, ताडिते, पूरिते अमरः। ''इष्टकृतिरष्टगुणिता व्येका दलिता विभाजितेऽष्टेन।''(लीला०)

**गुरुवर्ष** न०पु० गुरोर्मध्यगत्या राशिभोगकालात्मके वर्षभेदे। ''नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः। कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम् । अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम् । वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ। कार्त्तिक्यादीनि वर्षाणि गुरोरस्तोदयात् तथा।''(सू सि०) ''बार्हस्पत्येन षष्ट्यब्दम्।''

**गृभि** पु० ग्रहणे।

**गोचर** पु० गवां व्योमगतिमतां ग्रहाणां चरः भावे।

**गोमेद** पु० मणिभेदे । द्वीपभेदे । ''शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च । द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति।''(सि शि०)

**गोल** पु० सर्ववर्तुले। क्षेत्रभेदे । मण्डले।

**गोलक** पु० तस्य गोलाकृतित्वात् तथात्वम् । गोलशब्दार्थे पिण्डे।

**गोलयन्त्र** न० सिद्धान्तशिरोमणि उक्ते यन्त्रभेदे । ''अपवृत्तगरविचिह्नं क्षितिजे धृत्वा कुजेन संसक्ते। नाडीवृत्ते बिन्दुं कृत्वा धृत्वाथ जलसमं क्षितिजम् । रविचिह्नस्य च्छाया पतति कुमध्ये यथा तथा विधृते । उडुगोले कुजबिन्द्वोर्मध्ये नाड्यो द्युयाताः स्युः।'' यथोक्तविधिना खगोलान्तर्भगोलं बद्ध्वा तत्र क्रान्तिवृत्ते मेषादेरारभ्य रविभुक्तं राशिभागाद्यं दत्त्वा तदग्रे यच्चिह्नं तदपवृत्तगरविचिह्नमुच्यते। भगोलं चालयित्वा रविचिह्नं क्षितिजे धार्य्यम् । तथा धृते सति क्षितिजं प्राच्यां विषुवन्मण्डले यत्र लग्नं तत्र खटिकया बिन्दुः कार्य्यः। ततः क्षितिजवृत्तं जलसमं यथा भवति तथा गोलयन्त्रं स्थिरं कृत्वा भगोलस्तथा चाल्यो यथा रविचिह्नस्य च्छाया भूगर्भे पतति। तथा कृते सति विषुवद्वृत्ते क्षितिजबिन्द्वोर्मध्ये यावत्यो घटिकास्तावत्यस्तस्मिन् काले दिनगता ज्ञेया। अपवृत्ते मेषादेरारभ्य प्राक् क्षितिज–पर्य्यन्तं यद्राशिभागाद्यं तल्लग्नं ज्ञेयम् ।।

**गोलाध्याय** पु० गोलस्वरूपादिप्रतिपादके भास्करीये ग्रन्थभेदे।

**गौणचान्द्र** पु० ''चान्द्रोऽपि द्विविधः प्रोक्तो गौणमुख्यप्रभेदतः। गौणः कृष्णप्रतिपदः पौर्णमास्यन्त ईरितः''। कृष्णपदादि पौर्णस्यान्ते चान्द्रे मासे।

**ग्रस** पु० भक्षणे। ग्रासः, ग्रसनम्। ''राहुग्रस्ते निशाकरे''

**ग्रसन** न० भक्षणे। राहुणा चन्द्रसूर्ययोरुपरागे च। ग्रासे च।

**ग्रस्तास्त** पु० ग्रस्त एवास्तः। अदृष्टमोक्षे ग्रासोत्तरमस्तगते सूर्य्ये चन्द्रे च।

**ग्रस्तोदय** पु० ग्रस्तस्य उदयः। ग्रासोत्तरं रविचन्द्रयोरुदये। ''ग्रस्तास्ते त्रिदिनं पूर्वं पश्चात् ग्रस्तोदये तथा। खण्डग्रासे च त्रिदिनं निःशेषे सप्त सप्त चेति।।''

**ग्रह** न० गृह्णाति, गृह्णीते।

**ग्रह** पु० नवसु सूर्य्यादिषु। सूर्यचन्द्रोमङ्गलश्च बुधश्चापि बृहस्पतिः। शुक्रः शनैश्चरो राहुः केतुश्चेति नवग्रहाः।

**ग्रहकल्लाल** पु० ग्रहेषु कल्लल इव। राहौ।

**ग्रहगणित** न० ग्रहाणां तद्गत्यादीनां गणितं गणनं यत्र भवति तत् ।

**ग्रहगोचर** पु० ग्रहाणां जन्मराशितः स्थानभेदेन शुभाशुभसूचके गतिभेदे।

**ग्रहगति** स्त्री० ग्रहाणां प्रत्यहं भांशगमनभेदे। तत्र ग्रहाणां सावनदिनगतिमानं सिद्धान्तशिरोमणौ उक्तं यथा – ''महीमितादहर्गणात् फलानि यानि तत्कलाः। भवन्ति मध्यमाः क्रमान्नभस्सदां द्युभुक्तयः। समा गतिस्तु योजनैर्नभसदां सदा भवेत्। कलादिकल्पनावशान्मृदुद्रुता च सा स्मृता।''

**ग्रहचिन्तक** पु० ग्रहान् शुभाशुभदायकतया चिन्तयति ।

**ग्रहण** न० स्वीकारे, ज्ञाने, आदरे। चन्द्रसूर्य्ययोः राहुणा ग्रसने। ''छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत्। भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ।'' (सू सि०) इति छाद्यछादकनिर्णयमुक्तम्।




**ग्रहनेमि** पु० ग्रहाणां ग्रहकक्षाणां नेमिरिव । चन्द्रे । तस्य च ग्रहकक्षाधःस्थितत्वेन नेमितुल्यत्वात् तथात्वम् ।

**ग्रहपति** पु० सूर्य्ये ।

**ग्रहपुष्प** पु० ग्रहं पुष्णाति स्वकरैः । सूर्य्ये ।

**ग्रहमण्डल** न० ग्रहसमूहे ।

**ग्रहयुति** पु० ग्रहाणामेकराश्यादि स्थितिभेदेन भूतलस्थानां कल्पनीययोगभेदे तद्विशेषः सूर्यसिद्धान्ते उक्तं – ''ताराग्रहाणामन्योन्यं स्यातां युद्धसमागमौ। समागमः शशाङ्केन सूर्येणास्तमनं सह।''

**ग्रहयुद्ध** न० ग्रहाणामुपर्युपरिस्थितानां किरणसंस्पर्शादिना युद्धभेदे । ''उल्लेखं तारकास्पर्शाद्भेदे भेदः प्रकीर्त्यते। युद्धमंशुविमर्द्दाख्यमंशुयोगे परस्परम्। अंशादूनेऽप–सव्याख्यं युद्धमेकोऽत्र चेदणुः। समागमोंऽशादधिके भवतश्चेद्बलान्वितौ।''(सू सि०)

**ग्रहसमागम** पु०  चन्द्रेण सह भौमादिपञ्चग्रहयोगभेदे ।

**ग्रहाधार** पु०  ध्रुवनक्षत्रे ।

**ग्रहाधीश** पु०  सूर्य्ये । ग्रहाध्यक्षादयोप्यत्र ।

**ग्रहावमर्द्दन** पु० ग्रहौ चन्द्रसूर्य्यौ अवमृध्नाति । राहौ । चन्द्रसूर्य्यावमर्द्दनमिति तद्ध्यानलिङ्गात्तस्य तथात्वम् । ग्रहयोः परस्पर युद्धे च ।

**ग्रास** पु०  ग्रस्यते इति । ग्रहणे छाद्यच्छादकयोः स्पर्शः । ''छादको भास्कर-स्येन्दुरधस्थो घनवद् भवेत्। भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ।'' इत्युपक्रम्य ''ग्राह्यमानाधिके तस्मिन् सकलं न्यूनमन्यथा। योगार्धादधिके न स्यात् विक्षेपे ग्राससम्भवः।''(सू सि०)

**ग्रीष्म** पु०  ग्रसते रसान्। ज्येष्ठाषाढमासद्वयात्मके । ऋतुभेदे । ''ग्रीष्मे तीव्रकरोभानुर्न हेमन्ते तथाविधः।''

**घटिका** स्त्री०  ''गुर्वक्षराणामुदितं च षष्ट्या पलं पलानां घटिका किलैका।'' ज्योतिर्विदाभरणम्। षष्टिपलात्मके दण्डरूपे काले। दण्डद्वयरूपे मुहूर्त्तात्मके काले। घटयति विहितकार्य्यकरणाय। चतस्रो घटिकाः प्रातररुणोदय उच्यते।''(सि शि०)

**घटी** स्त्री०  कालमानज्ञापकः। दण्डात्मके काले। इष्टप्रमाणाकारसुषिरं पात्रम्। ''गुर्वक्षरैः खेन्दुमितैरसुस्तैः षड्भिः पलं तैर्घटिका खषड्भिः। स्याद्वा घटीषष्टिरहः खरामैः।''(सि शि०)

**घटीग्राह** त्रि०  घटीं गृह्णाति ग्रहः।

**घटीयन्त्र** न०  घट्याः दण्डरूपकालस्य ज्ञापकं यन्त्रम्। कालमानज्ञापके यन्त्रभेदे। तच्च यन्त्रं नानाविधं - ''अथ घटीयन्त्रादिभिश्चमत्कारियन्त्रैर्वा सर्वोपजीव्यं कालं सूक्ष्मं साधयेदि''ति कालसाधनमुपसंहरति । ''तोययन्त्रकपालाद्यैर्मयूरनरवानरैः। ससूत्ररेणुगर्भैश्च सम्यक्कालं प्रसाधयेत्।''(सू सि०)

**घृण** पु०  ग्रहणे।

**घृणि** पु०  किरणे, सूर्य्ये, जले।

**चक्रभोग** पु०  राशिचक्रस्य भोगः। ''यत्स्थानमारभ्य चलितो ग्रहः पुनस्त-त्स्थानमायाति स चक्रभोगः परिवर्त्त संज्ञः। तेषान्तु परिवर्त्तेन पौषान्ते भगणः स्मृतः।''(सू सि०)

**चक्रांशः** पु० राशिचक्रस्य ३६० भागे ।

**चण्डांशुः** पु० चण्डास्तीव्रा अंशवो यस्य। सूर्य्ये।

**चतुर्युग** न० चतुर्णां युगानां समाहारः। सत्यत्रेताद्वापरकलिरूपेषु चतुर्षु युगेषु। ''तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम्। सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः ४३२००००। सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्।''(सू सि०)

**चतुष्कोण** त्रि० चत्वारः कोणा अत्र। चतुरस्रे तदाकारे क्षेत्रभेदे।

**चन्द्र** पु० व्योमस्थे जलमये मण्डलाकारे ख्याते पदार्थे। ग्रहभेदः।

**चन्द्रकला** स्त्री० चन्द्रमण्डलस्य षोडशभागैकभागे। ''पुषा यशा सुमनसा रतिः प्राप्तिस्तथा धृतिः। ऋद्धिः सौम्या मरीचिश्च तथा चैवांशुमालिनी। अङ्गिरा शशिनी चेति छाया सम्पूर्णमण्डली। तुष्टिश्चैवामृत चेति कलाः सोमस्य षोडश।(कामशास्त्रे)

**चन्द्रगोल** पु० चन्द्र एव गोलः। गोलाकारे चन्द्रमण्डले।

**चन्द्रगोलस्थ** पु० चन्द्रगोले तिष्ठति। चन्द्रलोकस्थेषु स्वधाभोजिषु पितृलोकेषु। ''विधूद्ध्र्वभागे पितरो वसन्ति।''(सू सि०)

**चन्द्रचार** पु० चन्द्रस्य चारः गतिभेदः। चन्द्रमण्डलस्य राशिविशेषे ।

**चन्द्रमण्डल** न० गोलाकारे बिम्बे ।

**चन्द्रमस्** पु० चन्द्रे । ''तिथिश्चान्द्रमसं दिनम्।''(सू सि०)

**चरकाल** पु० ''निरक्षरदेशे क्षितिजाख्यवृत्तमुन्मण्डलं तज्जगुरन्यदेशे। स्वे स्वे कुजेर्कस्य समुद्गमोऽस्माच्चारार्धमर्कोदययोस्तु मध्ये।''(सि शि०) आदौ खदेशेऽथ निरक्षदेशे सूर्योदयोह्यस्तमयोन्यथातः। ऋणं ग्रहोऽस्मादुदये खमस्ते फलं चरोत्थं रविसौम्यमेले। याम्ये विलोमं खलु तत्र यस्मादुन्मण्डलं स्वक्षितिजादधस्तात् । नात्याह्वयादुत्तरयाम्यभागौ गोलस्य तावुत्तरयाम्यगोलौ। सिद्धान्तशिरोमणौ उक्ते दिनमानज्ञानोपाये कालभेदे।

**चाप** पु० वृत्तक्षेत्रार्धे। ''दलीकृतं चक्रमुशन्ति चापम् कोदण्डखण्डं खलु तुर्य्यगोलम्।''(सि शि०) ज्याभेदेन चापभेदानयनञ्च।

**चिति** स्त्री० इष्टकामानेन चितिमानज्ञानोपयोगिव्यवहारः चितिव्यवहारः। ''उच्छ्रयेण गुणितं चितेः किल क्षेत्रसंभवफलम् घनं भवेत्। इष्टिकाघनहृते घने चितेरिष्टि-कापरिमितिश्च लभ्यते। इष्टिकोच्छ्रयहृद्‌िच्छितिश्चितेः स्युःस्तराश्च दृषदां चितेरपि।'' (लीला०)

**चीव** पु० ग्रहणे संवृत्तौ।

**छाया** पु० आतपाभावे। प्रतिबिम्बे। आतपाभावश्च तेजःसाामान्यप्रभासश्चाराभावः तेन प्रदीप प्रभावरकपदार्थस्य प्रभानिरोधसम्बन्धत्वात् शङ्कुच्छाया नरच्छाया इत्यादि। ''शङ्कुमानाङ्गुलाभ्यस्ते भुजत्रिज्ये यथाक्रमम् । कोटिज्यया विभज्याप्ते छायाकर्णाव-हर्दले।''(सू सि०)

**छन्दश्चिति** स्त्री० एकादिगुरुज्ञानाय करणसूत्रम्। छन्दश्चित्यादौ करणसूत्रं श्लोकत्रयम्। ''एकाद्येकोत्तरा व्यङ्का व्यस्ता भाज्याः क्रमस्थितैः। परःपूर्वेण सङ्गुण्यस्तत्परस्तेन तेन च। एकद्वित्र्यादिभेदाः स्युरिदं साधारणं स्मृतम्। छन्दश्चित्युत्तरे छन्दस्योपयोगोऽस्य तद्विदाम्। मूषावहनभेदादौ खण्डमेरौ च शिल्पके।''(लीला०)

**छायाङ्क** पु० छाया सूर्यप्रतिबिम्बः अङ्कोऽस्य। चन्द्रः।

**छायातनय** पु० शनैश्चरे। ''सूर्य्यपुत्रं महाबाहुं छायागर्भसमुद्भवम् ।''

**छायापथ** पु० छायायुक्तः पन्थाः। आकाशस्थे ज्योतिश्चक्रमध्यवर्त्तिनि दक्षिणोत्तरायते तिरश्चीने आकाशस्थानभेदे।

**छायापाद** पु० छायायाः शङ्कुच्छायायाः पाद इव। द्वादशाङ्कुलशङ्कोच्छायापादमाने। ''अर्काङ्गुला तु सूच्यग्रया काष्ठीद्व्यङ्गुलमूलिका। शङ्कुसंज्ञा भवेच्चैव तच्छायां परिकल्पयेत्। मध्याह्नहीनैरादित्ययुक्तैश्छायाङ्गुलैर्हरेत्। षट्पूरितदिवादण्डं लब्धं दण्डादिकं भवेत्। पूर्वाह्नच्छाययातीतं पराह्नच्छाययैष्यकम्। शून्येकरामबाणेष्टदिशोरुद्राः क्रमोत्क्रमैः। आषाढादिषु मासेषु छाया माध्यान्हिकी मता। अयनांशजमासान्ते व्युत्क्रमेणादितो बुधैः। संख्योक्तान्यदिने भागहारे वृद्धीतरे तथा।''(सि शि०)

**छायायन्त्र** न० छायया कालज्ञानसाधकं यन्त्रम् । कालज्ञानसाधकेषु शङ्कुयष्टिचक्रप्रभृतिषु यन्त्रभेदे। ''शङ्कुयष्टिधनुश्चक्रैश्छायायन्त्रैरनेकधा। गुरूपदेशात् विज्ञेयं कालज्ञानमतन्द्रितैः।।''(सू सि०)

**छायमान** पु० छायया सूर्य्यप्रतिबिम्बेन मीयते। चन्द्रे। छायायाः प्रमाणे।

**छेद** पु० छेदने। छेदके,भाजके। ''छेदं गुणं गुणं छेदमिति।''(लीला०)

**जगच्चक्षुस्** पु० जगतां चक्षुरिव प्रकाशकत्वात् । सूर्य्ये।

**जनचक्षुत्** न० जनस्य चक्षुरिव। लोकचक्षुर्वत् प्रकाशकत्वात् । सूर्य्ये।

**जलविषुव(त्)** न० जलप्रधान विषुव(त्)। राशिचक्रस्थे तुलाराशिरूपे स्थानभेदे – भचक्रनाभौ विषुवद्वितयं समसूत्रगम्। भचक्रनाभौ भगोलस्य ध्रुवद्वयाभ्यां तुल्यान्तरेण मध्यभागे विषुवद्द्वितयं विषुवद्द्वयं समसूत्रगं परस्परं व्याससूत्रान्तरितं ध्रुवमध्ये विषुववृत्तस्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ लग्नौ तौ क्रमेण पूर्वापरौ विषुवत्सञ्ज्ञौ मेषतुलाख्यौ चेत्यर्थः।

**जलसमुद्र** पु० जलमयः समुद्रः। लवणादिषु सप्तसु समुद्रेषु शेषसमुद्रे । ''लवणजलधिरादौ दुग्धसिन्धुश्च तस्मात् इत्युपक्रमे दध्नो घृतस्य इक्षुरसस्य तस्मात् मद्यस्य च स्वादुजलस्य चान्त्यः।''(सि शि०)

**जीवा** स्त्री० सम्प्रसारणे दीर्घः सा अस्त्यस्य। धनुषो गुणे ज्यायाम्। भूमौ। धनुराकारक्षेत्रस्य वृत्तस्योभयरेखावृत्तसंलग्ने क्षेत्रभेदे।

**जीवार्द्धपिण्डक** पु० सूर्यसिद्धान्तपरिभाषिते चक्रस्थराशिकलानां शतानामष्टमेभागे। ''राशिलिप्ताष्टमो भागः प्रथमं ज्यार्द्धमुच्यते। तत्तद्विभक्तलब्धोनमिश्रितं तद्विदीयकम्। आद्यैनेवं क्रमात् पिण्डान् भक्त्वा लब्धोनसंयुताः। खण्डकाः स्युः चतुर्विशज्ज्यार्द्धपिण्डाः क्रमादमी।''(सू सि०) एकराशिकलानामष्टादशशतानामष्टमीऽंशस्तत्त्वाश्विमितः प्रथममाद्यं ज्यार्द्धं सम्पूर्णजीवनार्द्धपिण्डकः कथ्यते तदभिज्ञैः। अत्र चक्रार्द्धस्य धनुराकृतित्वात् तत्रोभयपार्श्वस्थरेखासंलग्नसरलरेखायाः ज्यरूपत्वात् तस्यार्द्धस्येव लाघवेन शास्त्रकारैर्ग्रहणेन तदीयार्द्धस्य पिण्डसंज्ञा कृतेति बोद्ध्यम्।

**जीवितेश** पु० प्राणनाथे। सूर्य्ये।

**जुह्वरा(वा)ण** पु० चन्द्रः।

**जैव** त्रि० जीवसम्बन्धम्। तत्क्षेत्रे। धनुमीनराशौ। तदीये पाते च। ''कृताद्रिचन्द्राः जैवस्य त्रिस्वाङ्काश्च मृगोस्तथा।''(सू सि०)

**ज्ञ** पु० बुधग्रहे। ''युगे सूर्यज्ञशुक्राणां खचतुष्करदार्णवाः।''(सू सि०)

**ज्या** स्त्री० गोलक्षेत्रान्तर्गते धनुराकारक्षेत्रस्थ केन्द्रस्थानात् उभयपार्श्वसंलग्ने सरलरेखाभेदे। ताश्च चतुर्विंशतिसंख्यिकास्तत्र क्रमज्या शब्दे उक्तविशिष्टा उत्क्रमज्यामानसंख्याङ्काश्च सूर्यसिद्धान्ते उक्तं यथा – ''मुनयो रन्ध्रयमला रसषट्का मुनीश्वराः। द्व्यष्टैका रुपषड्दस्राः सागरार्थहुताशनाः। खर्तुवेदा नवाद्र्यर्था दिङ्नगास्त्र्यर्थकुञ्जराः।




नगाम्बरवियच्चन्द्रा रूपभूधरशङ्कराः। शरार्णवहुताशैका भुजङ्गाक्षिशरेन्दवः। नवरूपमहोन्ध्रैका गजैकाङ्कानिशाकराः। गुणाश्विरूपनेत्राणि पावकाग्निगुणाश्विनः। वस्वर्णवार्थयमलास्तुरङ्गर्तुनगाश्विनः। नवाष्टनवनेत्राणि पावकैकयमाग्नयः। गजाग्निसागरगुणा उत्क्रमज्यार्द्धपिण्डकाः।''(सू सि०)

**ज्येष्ठामूलीय** पु० ज्येष्ठां मूलं वा नक्षत्रमर्हति पौर्णमास्याम्। ज्येष्ठे मासि तन्मासीयपौर्णमास्यां हि ज्येष्ठामूलयोरन्यतरस्य योगसम्भवात्तस्य तथात्वम्।

**ज्यैष्ठ** पु० ज्यैष्ठी पूर्णिमाऽस्मिन् मासे। ज्येष्ठानक्षत्रयुक्तयोगार्हपौर्णमासीघटिते वृषस्थरव्यारब्धे शुक्लप्रतिपदादिदर्शान्तरूपे । चान्द्रे।

**ज्यैष्ठो** स्त्री० ज्येष्ठानक्षत्रेण तत्समीपस्थमूलानक्षत्रेण वा युक्ता पौर्णमासी।

**ज्योतिर्ग्रन्थ** पु० ज्योतिषां ग्रहनक्षत्रादीनां गत्यादिसाधनम्।

**ज्योतिर्विद्या** स्त्री० ज्योतिषां सूर्य्यादीनां गत्यादिज्ञानसाधनं विद्या।

**ज्योतिर्लोक** पु० ज्योतिषां लोकः आश्रयः। कालचक्रप्रवर्तकध्रुवलोके।

**ज्योतिश्चक्र** न० ज्योतिभिर्नक्षत्रैर्घटितं चक्रम्। भचक्रे। अश्विन्यादिभिर्नक्षत्रैर्घटिते मण्डलाकारे राशिचक्रे। स्तिमितवायुगमित्यनेन तस्य नाधःपतनमात्रं विवक्षितं न गत्यभावः प्रवहवायुना तस्य प्रतिदिनं प्रत्यग्गतेः।

**ज्योतिः(श्शा)शास्त्रम्** न० ज्योतिषां सूर्य्यादीनां गत्यादि ज्ञापकं शास्त्रम्।

**ज्वलित** त्रि० दग्धे, दीप्ते च।

**तक्ष** पु० त्वचो ग्रहणे।

**तडित्** स्त्री० विद्युत्। तडित्सम्भवादिस्तु –''सुजलजलधिमध्ये वाडवोऽग्निः स्थितोऽस्मात् सलिलभरनिमग्नादुत्थिता धूममालाः। वियति पवननीताः सर्वतस्ता द्रवन्ति द्युमणिकिरणदीप्ता विद्युतस्तत्स्फुलिङ्गाः। अकस्माद्वैद्युतं तेजः पार्थिवांश–कमिश्रितम्। वात्यावद्भ्रमदाघाते प्रतिकूलानुकूलयोः। वायोस्तत् पतति प्रायो ह्यकालप्राज्यवर्षणे। यतः प्रावृषि नैवैते पांसवः प्रसरन्ति हि। तत् त्रेधा पार्थिवं चाप्य तैजसं तत्तदुत्थितम्। गर्त निर्झरदाहैश्च भूमिस्थैरनुभूयते।''(सि शि०)

**तत्पर** त्रि० तद्गते, तदासक्ते च। तस्मात् परे। ''परः पूर्वेण सङ्गुण्यस्तततत्परत्वेन तेन च''। ''यो अक्ष्णोर्निमेषस्य खरामभागः स तत्परस्तच्छतभाग उक्त।''(सि शि०) निमेषस्य त्रिंशद्भागात्मके सूक्ष्मकालभेदे।

**तन्त्राथिन्** पु० तन्त्रे कालचक्रे एतिर्गच्छति इति। कालचक्रगामिनि सूर्य्यादौ।

**तपस** पु० सूर्य्ये, चन्द्रे।

**तपन** पु० सूर्य्ये।

**तपुस्** पु० सूर्य्ये।

**तम** न० तमोगुणे, राहौ, अन्धकारे च।

**तमोघ्न** पु० तमोऽन्धकारं हन्ति इति। सूर्य्ये, चन्द्रे।

**तमोऽपह** पु० तमोऽपहन्ति। सूर्य्ये, चन्द्रे। अन्धकारनाशकमात्रे।

**तमोमय** त्रि० अन्धकारात्मके, राहौ।

**तरणि** पु० सूर्य्ये।

**तरस्थाने** न० ग्रहणस्थाने।

**तात्कालिक** त्रि० तस्मिन् काले भवः। ''अहर्गणोत्पन्नग्रहस्य तात्कालिकत्वात्।''

**तारकित** पु० नक्षत्रयुक्ते आकाशे।

**तारा** स्त्री० नक्षत्रे। ''अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशीर्षं तथा चार्द्रा पुनर्वसु पुष्यकौ। आश्लेषा च मघा पूर्वाफाल्गुन्युत्तराफाल्गुनी। हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका। ज्येष्ठा मूलं तथाषाढे पूर्वोत्तरपदादिके। श्रवणा च धनिष्ठा च शतभिषाद्यभाद्रिका। उत्तरादिभाद्रपदा रेवती भानि च क्रमात्।''

**ताराप्रमाण** न० अश्विन्यादिनक्षत्राणां स्वरूपावेदकसंख्याविशेषे। शिखिगुणर–सेन्द्रियानलशशिविषयगुणर्तुपञ्चवसुपक्षाः। विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विसुदहनाः। भूतशतपक्षवसो द्वात्रिंशच्चेति तारकामानम्। क्रमशोऽश्विन्यादीनां कालस्तारा–प्रमाणेन। नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत् । दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्यः।

**तारामण्डल** न० ताराणां मौक्तिकानां मण्डलं यत्र। नक्षत्रमण्डले।

**तारमृग** पु० तारारूपः मृगः। मृगशिरः। मृगशिरानक्षत्रे।

**तिग्मकर** पु० तिग्मः करः किरणो राजग्राह्यो वाऽस्य। सूर्य्ये।

**तिग्मदीधिति** पु० तिग्मा दीधिरस्य। तिग्मांशौ सूर्य्ये।

**तिग्मरश्मि** पु० तिग्मारश्मयोऽस्य । सूर्य्ये। खररश्मिके।

**तिग्मांशु** पु० तिग्मा अंशवो यस्य। सूर्य्ये।

**तिथि(थी)** पु० स्त्री० पञ्चदशसु चन्द्रकलाक्रियारूपासु प्रतिपदादिषु, पञ्चदश सङ्ख्यायाच्च। तनोति विस्तारयति वर्द्धमानां क्षीयमाणां वा चन्द्रकलामेकां यः कालविशेषः सा तिथिः। यद्वा यथोक्तकलया तन्यत इति तिथिः। ''तन्यते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः।''(स्कन्दपुराणम्) ''अर्काद्विनिसृतः प्राचीं यद्यत्यहरहः शशी। तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिरिति।''(सि शि०) सूर्य्यमण्डलस्य अधःप्रदेशवर्त्ती शीघ्रगामी चन्द्रः ऊद्ध्र्वप्रदेशवर्त्ती मन्दगामी सूर्य्यस्तथा सति तयोर्गतिविशेषवशात् दर्शे चन्द्रमण्डलमन्यूनमतिरिक्तं सूर्य्यमण्डलस्यधोभागे व्यवस्थितं भवति तदा सूर्य्यरश्मिभिः साकल्येन अभिभूतत्वाच्च चन्द्रमण्डलमीषदपि न दृश्यते। उपरितने शीघ्रगत्या सूर्य्याद्विनिःसृतः शशी प्राचीं याति। त्रिंशदंशोपेतराशौ द्वादशभिरंशैः सूर्य्यमुल्लङ्ख्य गच्छति। तथा चन्द्रस्य पञ्चदशसु भागेषु प्रथमभागो दर्शनयोग्यो भवति। सोऽयं भागः प्रथमकलेत्यभिधीयते। तत्कलानिष्पत्तिपरिमितः कालः प्रतिपत्तिथिर्भवति। एवं द्वितीयादितिथिष्ववगन्तव्यम्।

**तिथिक्षय** पु० तिथीनां नाशे। तिथीनां तिथ्युपलक्षितचन्द्रकलानां क्षयः क्षयारम्भो यस्मिन्। दर्शे अमावास्यायाम्। ''सावनाहानि चान्द्रेभ्योद्युभ्यः प्रोज्झ्य तिथिक्षयाः।''

(सू सि०) ''एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ।''

**तिथियुग्म** न० तिथिविशेषयोर्युग्मम्।

**तिथिसन्धि** पु० तिथ्योः सन्धि। तिथ्योः पूर्वापरयोः सन्धौ तन्मानायनम् उक्तं यथा – ''शशितनुविकलाभ्यश्चन्द्रभुक्त्येन्दुभान्वोर्गतिविवरकलाभिर्भूय एताभिरेव। पृथगथ गतियुत्या नाडिका सन्धिराप्ता भतिथिकरणयोगानां फलं तत्र मिश्रम्।'' (सि शि०) एवं शशिबिम्बकलाभ्यो या घटिका उत्पद्यन्ते ताः भतिथिकरणयोगानां सन्धिघटिकाः स्युः। सन्धौ मिश्रफलमित्यर्थः। अत्र सन्धिरुभयतोऽपि बिम्बस्य स्थितत्वात्।

**तिथ्यर्द्ध** न० करणे।

**तीक्ष्णरश्मि** पु० तीक्षणा रश्मयोऽस्य। तिग्मांशौ। सूर्य्ये।

**तुङ्गबीज** न० तुङ्गस्य शिवस्य बीजम्। ''तुङ्गवीजसमायुक्तं गोलयन्त्रं समाधयेत्।'' (सू सि०)

**तुङ्गीशः** पु० सूर्य्ये। रात्रीशे। चन्द्रे।

**तुलाबीज** न० तुलायाः तोलनस्य बीजं मलम्। ''दर्शार्द्धगुञ्जं प्रवदन्ति माषम्।''(लीला०)

**तुहिन** न० चन्द्रतेजसि।

**तुहिनकर** पु० तुहिनं करोऽस्य। चन्द्रे।

**तृतीया** स्त्री० चन्द्रमण्डलस्य तृतीयकलाक्रियायाम्। तदुपलक्षिते कालभेदे।

**तैष** पु० तिष्यनक्षत्रयुक्ता पौर्णमासी। पौषे मासि धनुःस्थरव्यारब्धे शुक्लप्रतिपदा–दिदर्शान्ते चान्द्रे मासि।

**तोयधि** पु० तोयानि धीयन्ते। समुद्रे। चतुःसंख्यायाञ्च। ''समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः।''(सू सि०)

**तोययन्त्र** न० कालज्ञानार्थे घटीयन्त्रभेदे। जलयन्त्रभेदे।

**तोल्य** पु० तोलनीये। तोलने। ''जीवानां वयसां मौल्ये तोल्ये वर्णस्य हेमनि।''

**त्रयीतनु** पु० सूर्य्ये।

**त्रयीमय** पु० त्रयात्मकः। सूर्य्ये।

**त्रिंश** त्रि० त्रिंशत्पूरणे, त्रिंशत्तमे। ''त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते।'' (सू सि०)

**त्रिंशत्** त्रि० त्रयोदशतः परिमाणस्य। ''योऽक्ष्णोर्निमेषस्य खरामभागः स तत्परस्तच्छतभाग उक्ता। त्रुटिर्निमेषर्धृतिभिश्च काष्ठाः तत्रिंशता सद्भगणैः कलोक्ता।''(सि शि०)

**त्रिंशांश** पु० त्रिंशस्त्रिंशत् पूरणोऽंशः। राशित्रिंशत्पूरणे भागे षष्टिकलात्मके भागे।

**त्रिकोण** त्रि० त्रयः कोणा यस्य। त्रिभुजे कोणभेदे।

**त्रिजीवा** स्त्री० त्रिषु राशिषु जीवा। ज्यार्द्धरूपे। ''लम्बज्याघ्नस्त्रिजीवाप्ताः स्फुटो भूपरिधिः स्वकः।''(सू सि०)''त्रिज्यया गजाग्निदेवराम सितया भक्तः। त्रिज्या-दयोऽप्यत्र। तच्छेषं विवरेणाथ हन्यात् त्रिज्यान्यकर्णयोः।'' त्रिज्यान्तकर्णयोस्त्रिराशि-ज्याद्वितीयशीघ्रकर्णयोः।

**त्रिनेत्रचूडामणिः** पु० चन्द्रः।

**त्रिप्रश्न** पु० त्रयाणां दिग्देशकालानां प्रश्नः। ''जगुर्विदोऽदः किल कालतन्त्रं दिग्देशकालावगमोऽत्र यस्मिन्। त्रिप्रश्ननाम्नि प्रचुरोक्तधाम्नि।''(सि शि०) दिग्देश-कालानां प्रतिपादनमिदं परिपूर्त्तिमाप्तमित्यर्थः। दिशां साधनं शिलातल इत्यादि नियतं, तत् सम्बन्धेन समकोणयाम्योत्तरशङ्कूनां साधनान्यपि दिगन्तर्गतान्यनियतानि। पलमालम्बाक्षादिसाधनं देशनिरूपणं नियतम्। कालसाधनं तद्वच्छायादिसाधनं च कालनिरूपणमिति विवेकः।

**त्रिभ** न० त्रयाणां राशीनां समाहारः। ''सत्रिभग्रहजक्रान्तिभागघ्नाः क्षेपलिप्तिकाः।'' त्रीणि भानि नक्षत्राणि यत्र। नक्षत्रत्रययुक्ते। ''कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम्। अन्त्योपान्त्यौ पञ्चमश्च त्रिभं मासत्रयं स्मृतम्।''(सू सि०) अत्र कार्त्तिकस्यादित्वेन ग्रहादन्त्य आश्विनः उपान्त्यः भाद्रः पञ्चमः फाल्गुनः। मासत्रयं

त्रिभिः स्मृतम्। रेवत्वश्विनीभरणीतिनक्षत्रत्रयसम्बन्धादाश्विनः। शततारापूर्वोत्तर-भाद्रपदेति ऋक्षत्रयसम्बन्धाद्भाद्रपदः पूर्वोत्तरफाल्गुनीहस्तेति ऋक्षत्रययोगात् फाल्गुनः।

**त्रिभजीवा** स्त्री० राशित्रयधनुराकारक्षेत्रस्य जीवायां त्रिज्यायाम्। ''शङ्कुः सत्रि-भजीवाघ्नः।''(सू सि०) त्रिभज्याप्यत्र। ''त्रिभज्यया भवेच्छङ्कुस्तद्वर्गं परिशोधयेत्।''

**त्रिभुज** न० त्रयो भुजा यत्र। त्रिबाह्वके त्रिकोणे क्षेत्रभेदे। ''त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या द्विष्ठा भूरूनयुता दलिताऽऽबाधे तयोः स्याताम्। स्वबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः। स्पष्टं त्रिभुजे फलं भवति।''(लीला०)

**त्रिस्पृशा** स्त्री० त्रीणि चान्द्रदिनानि एकस्मिन् सावने दिने स्पृशति। यदा पूर्वदिने दशमी परदिने चैकादशी स्वल्पा ततो द्वादशी रात्रिशेषे त्रयोदशी सा चैकादशी त्रिस्पृशा।

**त्रुटि(टी)** स्त्री० कालभेदे। ''योऽक्ष्णोर्निमेषस्य खराम३०भागाः स तत्परस्तच्छ-तभाग उक्ता। त्रुटिर्निमेषैर्धृतिभिश्च काष्ठा तत्त्रिंशता सद्गणकैः कलोक्ता।'' (सि शि०) क्षणद्वयात्मकः कालस्त्रुटिरिति। ''प्राणादिः कथितो मूर्त्तस्त्रुट्याद्योऽमूर्त्तसंज्ञकः।'' (सू सि०)''अणूद्वौ परमाणुः स्यात् त्रसरेणुस्त्रयः स्मृतः। ज्वालार्करश्म्यवगतः स्वमेवानुपतस्त्रगात्। त्रस्रेणुस्त्रयं भुङ्क्ते यः कालः सः त्रुटिः स्मृता। शतभागस्तु वेधः ख्यातैस्त्रिभिस्तु लयः स्मृतः। निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः।''

**त्रेता** स्त्री० त्रित्वमिता। चतुर्युगेष्वन्यतमम्। त्रेतायुगमानञ्च दिव्यमानेन ३००० वर्षाः आदौ सन्ध्या ३००। अन्ते सन्ध्यांशः ३०० मिलिताः ३६००। वर्षाः मानुषमानेन ३६० गुणिता १२९६००० वर्षाः।

**त्र्यष्टन्** त्रि० त्रिगुणिताः अष्ट। २४ संख्यायाम्।

**त्र्यस्र** न० तिस्रः अस्रयः कोणाः यस्य। त्रिकोणे।

**त्र्यहस्पर्श** पु० त्र्यहं चान्द्रदिनत्रयं स्पृशति। तिथित्रयस्पर्शिन्येकसावनदिनेत्र्यहस्पर्शति। दिनक्षये च।

**त्विषामीश** पु० सूर्य्ये।

**त्विषाम्पति** पु० सूर्य्ये।

**दक्षिणगोल** पु० विषुवरेखातो दक्षिणस्थिते तुलादिराशिषट्के यथाह – ''स सौम्यगोलो भदलं यदाद्यं याम्योऽपरं सायनभागभानोः।''(सि शि०)

**दक्षिणायन** न० दक्षिणस्या दक्षिण गोले वाऽयनं रवेः। दक्षिणगोलरूप तुलादिराशिषट्के। गमने तदुपलक्षिते ऋतुत्रयात्मके कालभेदे। रवेः कर्काटकसङ्क्रमणं दक्षिणायनं, मकरसङ्क्रमणश्च उत्तरायनम्।

**दर्श** पु० दृश्यते शास्त्रदृष्ट्या सूर्य्यचन्द्रौ एकत्र स्थितौ यत्र। सूर्य्येन्दुसङ्गमकाले अमावास्या तिथौ। एकत्रस्थौ चन्द्रसूर्य्यौ दर्शनात् दर्श उच्यते।

**दर्शत** पु० दृश्यतेऽसौ दिवि। सूर्य्यः, चन्द्रः।

**दर्शित** त्रि० प्रकटिते, प्रकाशिते।

**दर्शिवन्** त्रि० अन्येऽपि दृश्यन्ते इति। ''अन्यो न त्वामृते छेत्ता विद्यते सर्वदर्शिवान्।''(सू सि०)

**दल** न० अर्द्धे । खण्डे। ''अङ्घ्रिः स्वत्र्यंशयुक्तः सनिजदलयुतः कीदृशः कीदृशोऽसौ।''

**दलित** त्रि० विकशिते। खण्डीकृते, अर्द्धीकृते। व्येका दलिता विभाजितेष्टेन। ''दलिता बाधे तयोः स्याताम्।''(लीला०)

**दशरश्मिशत** पु० दशरश्मिशतान्यस्य। सहस्रकिरणे सूर्ये।

**दशवाजिन्** पु० दश वाजिनो रथोऽस्य। चन्द्रे।

**दशशतरश्मि** पु० दशशतं सहस्रं रश्मयोऽस्य। सूर्य्ये।

**दशाश्व** पु० दशरथोऽस्य। चन्द्रे।

**दारण** न० दारयति जलमलम्। ''तद्दारुदारणपथेषु चतुर्षु किं स्यात्।''(लीला०)

**दारव** त्रि० दारुणः विकारः। काष्ठमये पदार्थे। ''अभीष्टं पृथिवीगोलं कारयित्वा तु दारवम्।''(सू सि०)

**दार्शपौर्णिमासिक** त्रि० दर्शे पौर्णमास्यां च भवः।

**दास्र** न० दस्रौ देवते अस्य। अश्विनी नक्षत्रे।

**दिक्पति** पु० दिशां पत्यौ। ''सूर्य्यः सोमः क्षमापुत्रः सैंहिकेयः शनिः शशी सौम्यस्त्रिदशमन्त्री च पूर्वादिदिगधीश्वराः।''(सारावली) सूर्य्यादयः ग्रहाः।

**दिक्साधन** न० दिशः साध्यन्ते ज्ञानार्थमनेन। ''नृपाङ्गुलैः संमितकर्कटेन सूत्रेण वा वृत्तवरं विलिख्य। रव्यङ्गुलं शङ्कुममुष्य मध्ये निवेशयेत् खाक्षिमिताङ्गुलीभिः। चतुर्मिताभिश्च ऋजूत्तमाभिः संस्पृष्टशीर्षं तु शलाकिकाभिः। तच्छङ्कुभा यत्र विशेदमेयाद्वृत्ते क्रमात् स्तो वरुणेन्द्रकाष्ठे''। नृपाङ्गुलैः परिमितैः कर्कटेन सूत्रेण वा वृत्तं विलिख्य तन्मध्ये द्वादशाङ्गुलं दृढसूच्यग्रं स्थापयेत् । कीदृशं विंशत्य-ङ्गुलमिताभिश्चतसृभिः ऋजुभिः समानाभिः शलाकाभिः कल्पितचतुर्दिग-तवृत्तस्थाभिः संस्पृष्टमस्तकमेवं शङ्कुसमत्वं साधयित्वा तादृशस्य शङ्कोः च्छाया पूर्वाह्ने यत्र यस्मिन् प्रदेशे वृत्ते प्रविशति यत्र वा पराह्ने वृत्ताद्बहिरपैति तत्र चिह्नयोः क्रमात् प्रतीचा प्राची च भवति इति।

**दिक्स्रक्ति** न० दिक्कोणे ।

**दिगंश** पु० दिक्स्थे अंशभेदे। ''चक्रांशकाङ्के क्षितिजाख्यवृत्ते प्राक्स्वस्तिकाभीष्ट दिशोस्तु मध्ये। येऽंशाः स्थितास्तेऽत्र दिगंशकाख्यस्तज्ज्यात्र दिग्ज्येत्यपरे विभागे।'' (सि शि०)कदाचिदप्यभीष्टदिने यस्मिन् काले पृच्छकः पृच्छति तत्र कालेऽर्कोपरि न्यस्तस्य दिन्मण्डलस्य क्षितिजस्य च सम्पाते याभीष्टा दिक् तस्याः प्राक् स्वस्तिकस्य चान्तरे क्षितिजवृत्ते येऽंशास्तेऽत्र दिगंशका ज्ञेयाः।

**दिगन्त** पु० दिशामन्ते।

**दिगीश्वर** पु० इन्द्रादौ दिक्पालके। सूर्य्यादिग्रहे च। ''दिगीश्वराः भास्करशुक्रभौमाः राह्वर्किचन्द्रज्ञसुरार्चिताः स्युः।''

**दिग्ज्ञान** न० दिशां प्राचीत्वादिज्ञानसाधने प्रकारभेदे। ''वृत्तेऽम्भः सुसमीकृतक्षितिगते केन्द्रस्थशङ्कोः क्रमाद्भाग्रं यत्र विशत्यपैति च यतस्तत्रापरैन्द्र्यौ दिशौ। तत्काला-पमजीवयोस्तु विवराद्भाकर्णमित्याहताल्लब्धज्याप्तमिताङ्गुलैरयनदिश्यैन्द्रो स्फुटा चालिता। तन्मत्स्यादथ याम्यसौम्यककुभौ सौम्या ध्रुवे वा भवेदेकस्मादपि भाग्रतो भुजमितां कोटीमिमां शङ्कुतः। न्यस्येद्यष्टिभुजं तथा भुवि यथा यष्ट्यग्रयोः संयुतिः

कोटिः प्राच्यपरा भवेदिति कृते बाहुश्च याम्योत्तरा।''(सि शि०) उदकेन समीकृतायां भूभाविष्टप्रमाणं वृत्तं विलिख्य तस्य केन्द्रे द्वादशाङ्गुलशङ्कुं निवेश्य तस्य च्छाया तस्मिन् वृत्ते यत्र प्रविशति पूर्वाह्ने वा अपराह्ने यतो निर्गच्छति तत्र पश्चिमपूर्वदिशौ किल भवतः। परन्तु यस्मिन् काले छायाप्रवेशो जातो यस्मिन् काले च निर्गमस्तात्कालिकयोरर्कयोः क्रान्तिज्ये साध्ये। तयोरन्तरात् तस्याच्छायायाः कर्णेन गुणिताल्लम्बज्यया भक्ताद्यल्लब्धमङ्गुलादि फलं तेनैन्द्री दिगुत्तरश्चालिता स्फुटा भवति यद्युत्तरेऽयने रविर्वर्त्तते तदा उत्तरतः यदि दक्षिणे तदा दक्षिणतः। एवं स्फुटा प्राची। अन्यथा स्थूलेत्यर्थः। तन्मत्स्याद्याम्यसौम्यौ दिशौ।

**दिङ्मण्डल** त्रि० दिशां मण्डले।

**दिन** पु० न० सूर्यकिरणावच्छिन्ने काले। षष्टिदण्डात्मके मानुषे अहोरात्रे, तिथिरूपे काले, चन्द्रमासात्मके पैत्र्ये कालभेदे सौरवर्षरूपे, ''दिनं दिनेशस्य यतोऽत्र दर्शने तमी तमोहन्तुरदर्शने सति। कुपृष्ठगानां द्युनिशं यथा तथा पितॄणां शशि-पृष्ठवासिनाम्।''(सि शि०) ''तिथिश्चान्द्रमसं दिनम्।''(सू सि०)

**दिनकर** पु० दिनं करोति इति। सूर्य्ये। ''ब्रह्माण्डसम्पुटपरिभ्रमणं समन्तादभ्यन्तरे दिनकरस्य करप्रसारः।''(सू सि०)

**दिनकर्तृ** पु० दिनं करोति इति। सूर्य्ये।

**दिनक्षय** पु० दिनस्य तिथेः क्षयः। तिथिक्षये। ''एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्।''(सू सि०)

**दिनप** पु० सूर्यः। सूर्यादिषु वारेषु, ''दिनाब्दमासहोराणामधिपा न समाः कुतः'' इति मयस्य प्रश्ने ''मन्दादधः क्रमेण स्युः चतुर्था दिवसाधिपाः। वर्षाधिपदयस्तद्वत् तृतीयाः प्रकीर्तिताः।।''(सू सि०) ''शनेः सकाशादधः क्रमेण चतुर्थसङ्ख्यका ग्रहा दिनाधिपतयो वारेश्वरा भवन्ति यथा शनिरविचन्द्रभौमबुधगुरुशुक्रा इति तत्क्रमः।।'' ''सूतकादि परिच्छेदो दिनमासाब्दपास्तथा। मध्यमा ग्रहभुक्तिस्तु सावनेनैव गृह्यते।''

**दिनपति** पु० सूर्य्ये।

**दिनपात** पु० दिनस्य चान्द्रदिनस्य तिथेः पातः क्षयः।

**दिनमणि** पु० दिने मणिरिव प्रकाशकत्वात् । सूर्य्ये। ''महदहः किमहो रजनी तनुर्दिनमणौ गणकोत्तरगोलके। ननु तनुर्दिवसो महती निशा वद विचक्षण दक्षिणदिग्गते।''(सि शि०)

**दिनमान** न० दिनस्य मानम्। सूर्यदर्शनकालस्य मानभेदे यथा – '' अतश्च सौम्ये दिवसो महान् स्यात् रात्रिर्लघुर्व्यस्तमतश्च याम्ये। द्युरात्रवृत्ते क्षितिजादधःस्थे रात्रिर्यतः स्याद्दिनमानमूर्द्धे। सदा समत्वं द्युनिशोर्निरक्षे नोन्मण्डलं तत्र कुजाद्यतोऽन्यत्। षट्षष्टिभाभ्यधिकाः पलांशाः यत्राथ तत्रास्त्यपरो विशेषः। लम्बाधिका क्रान्ति-रुदक् च यावत् तावद्दिनं सन्ततमेव तत्र। यावच्च याम्यां सततं तमिस्रा ततश्च मेरौ सततं समार्द्धम्। विषुवद्वृत्तं द्युसदां क्षितिजत्वमिदं तथा च दैत्यानाम्। उत्तरयाम्यौ क्रमशो मूर्द्धोर्द्धगतौ ध्रुवौ यतस्तेषाम्। उत्तरगोले क्षितिजादूद्ध्वं परितो भमन्तमादित्यम्। सव्यं त्रिदशः सततं पश्यन्त्यसुरा असव्यगं याम्ये।। दिने दिनेशस्य यतोऽत्र दर्शने तमी तमोहन्तुरदर्शने सति। कुपृष्ठगानां द्युनिशं यथा नृणां तथा पितृणाम् शशिपृष्ठवासिनाम्।''(सि शि०)

**दिनराशि** पु० अहर्गणे, ''यथा स्वभगणाभ्यस्तो दिनराशिः कुवासरैः। विभाजितो मध्यगत्या भगणादिर्ग्रहो भवेत् ।।''(सू सि०)

**दिनव्यास** पु० दिनस्य अहोरात्रककालज्ञापकवृत्तस्य व्यासः। सूर्यसिद्धान्ते उक्ते अहोरात्रवृत्तव्यासे –''क्रान्तेः क्रमोत्क्रमज्ये द्वे कृत्वा तत्रोत्क्रमज्यया। हीना त्रिज्या दिनव्यासदलं तद्दक्षिणोत्तरम्।''(सू सि०) दिनव्यासदलमहोरात्रवृत्तस्य व्यासार्द्धम्।।

**दिनांश** पु० त्रिधा विभक्तस्य दिनस्य प्रातर्मध्याह्नसायाह्नेषु भागेषु।

**दिनार्द्ध** पु० दिनस्य सूर्यकिरणप्रकाशात्मककालस्यार्द्धम् । दिवाभागस्यार्द्धे । ''विषुवति च्छाया स्वदेशे या दिनार्द्धजा।''(सू सि०)

**दिनेश** पु० सूर्य्ये ।

**दिनेशात्मज** पु० शनौ। सूर्यस्यापत्ये।

**दिव्** पु० दीव्यत्यत्र। दिने – ''सौरेण द्युनिशोर्मानम्।''(सू सि०)

**दिवाकरपुत्र** पु० शनौ ।

**दिवामणि** पु० दिवा मणिरिव । सूर्य्ये ।

**दिव्यदिन** न० दिवि भवम् यत् । दैव दिने – ''मासैर्द्वादशभिर्वर्षं दिव्यं तदह उच्यते।''(सू सि०)

**दिव्यमान** न० दैवे माने – ''सुरासुराणामन्योन्यमहोरात्रं विपर्ययात् । यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात् । युगानां त्रिधनं यात् तथा कृतयुगं त्विदम् । प्रोज्झ्या सृष्टेस्ततः कालं पूर्वोक्तं दिव्यसंख्यया। ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा। सौरं च सावनं चान्द्रमार्क्षमानानि वै नव।''(सू सि०)

**दीप्तिमत्** पु० दीप्तिरस्त्यस्य । दीप्तियुक्ते । ''उदक्स्थो दीप्तिमान् स्थूलो जयी याम्येऽपि यो बली।''(सू सि०)

**दुग्धसमुद्र** पु० दुग्धोदके क्षीरसमुद्रे । दुग्धसिन्धु प्रभृतयोऽप्यत्र। ''लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतममृतरश्मिः श्रीश्च यस्मात् बभूव।''(सि शि०)

**दुष्टयोग** पु० वैधृति व्यतीपातादि योगे तस्य स्नानदानाज्यतिरिक्त कर्मसु वर्ज्यत्वमशुभसूचकत्वञ्च नानास्थाने उक्तं यथा–''तुल्यांशुजालसम्पर्कात् तयोस्तु प्रवहाहतः। तद्दृक्क्रोधभवो वह्निर्लोकाभावाय जायते। विनाशयति पातोऽस्मिन् लोकानामसकृद् यतः। व्यतीपातः प्रसिद्धऽोयं संज्ञाभेदेन वैधृतः। स कृष्णो दारुणवपुर्लोहिताक्षो महोदरः। सर्वानिष्टकरो रौद्रो भूयो भूयः प्रजायते।''(सू सि०) ''आन्द्यन्तकालयोर्मध्यः कलोज्ञेयोऽति दारुणः। प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः। एकायनगतं यावदर्केन्द्वोर्मण्डलान्तरम्। सम्भवस्तावदेवास्य सर्वकर्म–विनाशकृत्।''(सू सि०) व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा। एतत् भसन्धित्रितयं सर्वकर्मसु वर्जयेत्।''(सू सि०)अरिष्टसूचके गोचरविलग्नादिस्थग्रहयोगभेदे च।

**दृक्कर्मन्** पु० दृगर्थं दृष्टयर्थं कर्म। ग्रहाणां दर्शनयोग्यता ज्ञानार्थे – ग्रहनक्षत्रयोगाद्युपयोगि संस्कारभेदरूपं यथाह– ''नक्षत्रग्रहयोगेषु ग्रहास्तोदयसाधने। शृङ्गोन्नतौ तु चन्द्रस्य दृक्कर्मादाविदं स्मृतम्।''(सू सि०) अत्र निमित्तसप्तमी ग्रहनक्षत्राणां बहुत्वाद् बहुवचनम् । दृक्कर्म द्विविधं – आयनमक्षजञ्च।

**दृक्षेप** पु० दृष्टिपाते । दृग्वृत्तज्यान्तरालस्थ शररूपे क्षेपे च यथा – ''अथाभ्यामुपयुक्तं दृक्षेपं लम्बनोपयुक्तां दृग्गतिं चाह।''''मध्योदयज्याभ्यस्ता त्रिज्याप्ता वर्गितं फलम्। मध्यज्यावर्गविश्लिष्टं दृक्षेपः शेषतः पदम्। तत्त्रिज्यावर्गविश्लेषान्मूलं शङ्कुः सदृग्गतिः।''इति।

**दृगध्यक्ष** पु० सूर्ये।

**दृग्गति** स्त्री० दृशोर्गतौ । ग्रहस्पष्टोपयोगिनि दृशो गतिभेदे।

**दृग्गोल** न० खगोलान्तर्गते गोलभेदे यथोक्तं ''बद्ध्वा खगोले नलिकाद्वयं च ध्रुवद्वये तन्नलिकास्थमेव । बहिःखगोलात् विदधीत धीमान् दृग्गोलमेवं खलु वक्ष्यमाणम् । भगोलवृत्तैः सहितः खगोलो दृग्गोलसंज्ञोऽपमण्डलाद्यैः। द्विगोलजातं खलु दृश्यतेऽत्र क्षेत्रं हि दृग्गोलमतो वदन्ति।''(सि शि०) तस्मिन् खगोले ध्रुवचिह्नयोर्नलिकाद्वयं बद्ध्वा तन्नलिकाधारमेव खगोलाद्बहिरङ्गुलत्रयान्तरे दृग्गोलं रचयेत्। कथितैः खगोलवृत्तैर्वक्ष्यमाणैर्भगोलवृत्तैः क्रान्तिविमण्डलान्द्यैर्यो निबध्यते स दृग्गोलः। कथमस्य दृग्गोलसंज्ञेति तदर्थमाह द्विगोलजातमित्यादि। यतोऽग्राकुज्या–समशङ्क्वाद्यक्षक्षेत्राणि द्विगोलजातानि भगोलवृत्तैः खगोलवृत्तमिलितैस्तान्युत्पद्यन्ते। भिन्नगोलबन्धे सम्यङ्नोपलभ्यन्त इति दृग्गोलः कृतः ।

**दृग्ज्या** स्त्री० सूर्यसिद्धान्ते उक्तायां दिनमानादिज्ञानार्थं शङ्कुच्छायोपयोगिन्यां दृष्टि–योग्यायां दृग्वृत्तक्षेत्रस्थजीवायाम्। ''गोलक्रमात् तद्धृतिहीनयुक्ता हृतिः पलक्षेत्रभुजेन निघ्नी। तत्कर्णभक्ता भवतीह दृग्ज्या प्रद्योतने वा द्युदलं प्रयाते।''(सि शि०) यथोक्तम् – ''त्रिज्योदक्चरजायुक्ता याम्यायां तद्विवर्जिता। अन्त्या नतोत्क्रमज्योना स्वाहोरात्रार्द्धसङ्गुणा। त्रिज्याभक्ता भवेच्छेदो लम्बज्याघ्नोऽथ भाजितः। त्रिभज्यया भवेच्छङ्कुस्तद्वर्गं परिशोधयेत्। त्रिज्यावर्गात् पदं दृग्ज्या छायाकर्णौ तु पूर्ववत्।''(सू सि०) उत्तरगोले चरोत्पन्नया ज्यया चरज्ययेत्यर्थः पूर्वचरानयने चरज्यायाश्चरजेति सङ्ज्ञोक्तेः। युक्ता त्रिज्यान्त्या स्यात् । याम्यगोले तया चरज्ययोना त्रिज्यान्त्या स्यात्। नतोत्क्रमज्योना सूर्योदयात् दिनघगतघट्यो दिनशेषघट्यो वा दिनार्द्धान्तर्गता उन्नतसंज्ञास्ताभिनूनं दिनार्द्धं नतकालो घट्यात्मकस्तस्यामुभ्यो लिप्तास्तत्वमयै–रित्यादिविधिना मुनयो रन्ध्रयमला इत्याद्युक्तोत्क्रमज्यापिण्डैर्ज्योत्क्रमज्या।

पञ्चदशघट्यधिकनते तु पञ्चदशघट्यूननतस्य क्रमज्याखण्डैः क्रमज्या तया युक्ता त्रिज्योत्क्रमज्या भवति। तया हीनेत्यर्थः। स्वाहोरात्रार्द्धसङ्गुणा। गृहीतचरज्या-सम्बन्ध्यहोरात्रवृत्तव्यासार्द्धं द्युज्या तया गुणिता त्रिज्यया भक्ता फलं छेदसंज्ञं स्यात्। अधानन्तरं छेदो लम्बज्यया गुणितस्त्रिज्ययां भाज्यः फलमिष्टकाले शङ्कुः स्यात्। तस्य शङ्कोर्वर्गं त्रिज्यावर्गात् शोधयेत्। शेषस्य मूलं दृग्ज्या।

**दृग्लम्बन** न० सिद्धान्तशिरोमणौ उक्ते ग्रहणदर्शनोपयोगिनि दृक्षेत्रस्थलम्बभेदे यथा – ''इष्टापवर्तितां पृथ्वीं कक्षे च शशिसूर्ययोः। भित्तौ विलिख्य तन्मध्ये तिर्यग्रेखां तथोर्द्धगाम्। तिर्यग्रेखा युतौ कल्प्यं कक्षायां क्षितिजं यथा। ऊद्ध्वरेखायुतौ खार्द्धं दृग्ज्याचापांशकैर्नतौ। कृत्वार्केन्दू समुत्पत्तिं लम्बनस्य प्रदर्शयेत् । एकं भूमध्यतः सूत्रं नयेच्चण्डांशुमण्डलम् । द्रष्टुर्भूपृष्ठगादन्यद्दृष्टिसूत्रं तदुच्यते। कक्षायां सूत्रयोर्मध्ये यास्ता लम्बनलिप्तिकाः। गर्भसूत्रे सदा स्यातां चन्द्रार्कौ समलिप्तिकौ । दृक्सूत्राल्लम्बितश्चन्द्रस्तेन तल्लम्बनं स्मृतम् । दृग्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम्।''(सि शि०) ''यत्र तत्र नतादर्कादधश्चन्द्रावलम्बनम्। तद्दृग्वृत्तेऽन्तरं चन्द्रभान्वोः पूर्वापरं च तत्। पूर्वापरं याम्योदग्जातं तेनान्तरद्वयम्। अत्रापमण्डलं प्राची तत्तिर्यग्दक्षिणोत्तरा। यत् पूर्वापरभावेन लम्बनाख्यं तदन्तरम्। यदान्योत्तरभावेन नदिसंज्ञं तदुच्यते। नतिलिप्ता भुजः कर्णो दृग्लम्बनकलास्तयोः। कृत्यन्तरपदं कोटिः स्फुटलम्बनलिप्तिकाः। परलम्बनलिप्ताघ्नी त्रिज्याप्ता रविदृग्ज्यका। दृग्लम्बन-कलास्ताः स्युरेवं दृक्क्षेपतो नतिः। गत्यन्तरस्य तिथ्यंशः परलम्बनलिप्तिका। गतियोजनतिथ्यंशः कुदलस्य यतो मितिः। स्युर्लम्बनकला नाड्यो गत्यन्तरलवोद्धृताः। प्रागग्रतो रवेश्चन्द्रः पश्चात् पृष्ठेऽवलम्बितः।''(सि शि०)

**दृग्वृत्त** न० दृशः प्रचारस्थानं वृत्तमिव। वृत्ताकारे दृक्प्रचारस्थले। दृग्वृत्तस्य कदम्बप्रोतवृत्ताकारत्वे क्रान्तिवृत्ते ततोऽन्तराभावाद् लम्बनाभावः। याम्योत्तरमन्तरं दृग्लम्बनं नतिरेवोत्पन्ना। दृग्वृत्ताकारक्रान्तिवृत्ते तु दृग्लम्बनमेव क्रान्तिवृत्ते तयोरन्तरमिति लम्बनमुपपन्नं नत्यभावश्च। तथा च दृग्वृत्तस्य कदम्बप्रोतवृत्ताकारत्वे त्रिभोनलग्नस्थानेऽसौ भवति तद्वृत्तस्य क्रान्तिवृत्तयाम्योत्तरत्वेनोदयास्तलग्नमध्य-वर्तित्वेन लग्नस्थानात् त्रिमान्तरितत्वात्।

**दृङ्नति** स्त्री० सिद्धान्तशिरोमणौ ग्रहणदर्शनोपयोगितया दर्शिते दृक्प्रचारस्य नतिविशेषे यथा–''त्रिभोनलग्नस्य रवेत्र शङ्कोर्वा दृग्ज्ययोर्वर्गवियोगमूलम् । स्याद्दृङ्नतिर्वेदगुणा त्रिमौर्व्या भक्ताथवा लम्बननाडिका स्युः।''(सि शि०)

**दृङ्मण्डल** न० दृशः तत्प्रचारस्य मण्डलमिव। सिद्धान्तशिरोमणौ उक्ते गोलबन्धार्गते वलयाकारे मण्डलभेदे यथोक्तं तत्र–''ऊर्द्धाधरस्वस्तिककीलयुग्मे प्रोतं श्लथं दृग्वलयं तदन्तः। कृत्वा परिभ्राम्य च तत्र तत्र नेयं ग्रहो गच्छति यत्र यत्र। ज्ञेयं तदेवाखिलखेचराणां पृथक् पृथग्वा रचयेत् तथाष्टौ। दृङ्मण्डलं वित्रिभलग्नकस्य दृक्षेपवृत्ताख्यमिदं वदन्ति।''(सि शि०) खस्वस्तिके चाधःस्वस्तिके चान्तःकीलकौ कृत्वा तयोः प्रोतं श्लथं दृग्वलयं कार्यम् । तत्तु पूर्ववृत्तेभ्यः किञ्चिन्न्यूनं कार्यम् । यथा खगोलान्तर्भवति। यद्येक एव ग्रहगोलस्तदैकमेव दृङ्मण्डलम्। यो यो ग्रहो यत्र यत्र वर्तते तस्य तस्योपरीदमेव परिभ्राम्य विन्यस्य दृग्ज्याशङ्क्वादिकं दर्शनीयम्। अथवा पृथक् पृथक् अष्टौ दृङ्मण्डलानि रचयेत्। तथाष्टमं वित्रिभलग्नस्य तच्च दृक्क्षेपमण्डलम्।

**दृढ** त्रि० कुट्टकगणितभेदे। ''भाज्यो हारः क्षेपकश्चापवर्त्यः केनाप्यादौ सम्भवे कुट्टकार्थम्। येन च्छिन्नौ भाज्यहारौ न तेन क्षेपश्चैतद्दुष्टमुद्दिष्टमेव।। परस्परं भाजितयोर्ययोर्यः शेषस्तयोः स्यादपवर्त्तनं सः। तेनापवर्त्तेन विभाजितौ यौ तौ भाज्यहारौ दृढसंज्ञकौ स्तः।''(लीला०)

**दृश्य** त्रि० ग्रहाणां नक्षत्राणां च कालांशविशेषेण सूर्यसान्निध्ये दृश्यादृश्यत्वम्।

**दृश्य(ष्ट)** न० लीलावत्युक्ते इष्टकर्मरूपे गणितभेदे।

**देवनिर्मिते** त्रि० देवैः रचिते। ''द्वीपेषु दिक्षु पूर्वादि नगर्य्यो देवनिर्मिताः।''(सू सि०)

**देवभाग** पु० देवाय देयो भागः। सूर्यसिद्धान्तोक्ते लवणसमुद्रात् उत्तरस्थिते उत्तरगोलरूपे पदार्थे। ''ततः समन्तात् परिधिः क्रमेणायं महार्णवः। मेखलेव स्थितो धात्र्या देवासुरविभागकृत्।'' तेन समुद्रादुत्तरं भूगोलस्यार्द्धं जम्बूद्वीपं देवानाम्, समुद्राद्दक्षिणं समुद्रातिरिक्तं भूगोलस्यार्द्धं षट्द्वीपषट्समुद्रोभयात्मकं दैत्यानामिति सिद्धम्। मेरुदण्डानुबद्धभूगोलमध्ये परिधिरूपो लवणसमुद्रोऽस्ति। उत्तरगोलार्द्धं

दक्षिभूगोलार्द्धान्तर्गत समुद्रस्य प्रान्तपरिधिस्पृष्टमिति मेखलाया कन्यधःस्थितत्वेन तात्पर्यार्थः।

''मेषादौ देवभागस्थो देवानां याति दर्शनम्।'''' देवभागे सुराणां च हेमन्ते मन्ततान्यथा।'' ''धनुर्मृगस्थः सविता देवभागे न दृश्यते। देवभागेऽसुराणां तु वृषाद्ये भचतुष्टये। भूमण्डलात् पञ्चदशे भागे दैवेऽथ वाऽऽसुरे।''(सू सि०)

**देवौकस्** न० देवस्थाने सुमेरौ।'' राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः। रोहीतक-मवन्ती च यथा सन्निहितं सरः।''(सू सि०)

**देशान्तर** न० अन्योदेशः। भूगोलस्थमध्यरेखातः पूर्वापरस्थे उत्तरदक्षिणस्थे वा योजन-विशेषान्तरूपे चरसंज्ञके पदार्थे।

**देहभुक्** पु० सूर्य्ये।

**दैवत** न० देवतैव। ''दैवतैरपकृष्यन्ते सुदूरमतिवेगिताः।''(सू सि०)

**दैवयुग** न० देवस्येदम्। दिव्ये युगे देवमानेन द्वादशसहस्रवर्षमितकाले। ''यदेतत् परिसङ्ख्यातमादावेव चतुर्युगम्। एतत् द्वादशसाहस्रं देवानां युगमुच्यते। सुरासुराणा-मन्योऽन्यमहोरात्रो विपर्ययात्। तत्षष्टिः षड्गुणा दिव्यं वर्षमासुरमेव च।''(सू सि०) देवदैत्यानां परस्परं व्यत्ययात् अहोरात्रः। देवानां यद्दिनं तदसुराणां रात्रिः। देवानां या रात्रिः तदसुराणां दिनम्। दैत्यानां यद्दिनं तद्देवानां रात्रिः। दैत्यानां या रात्रिस्तद्देवानां दिनमिति।

''तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम्। सूर्याब्दसङ्ख्यया द्वित्रिसागरै-रयुताहतैः। सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्। कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया।''(सू सि०)

**द्युगण** पु० द्यूनां दिवां वा दिनानां गणः। ग्रहाणां मध्यगतिसाधनाङ्गे दिनवृन्दे। ''रविदिनान्तगताधिमासकैः कृतदिनैः सहितो द्युगणो विधोः।''(सू सि०)

**द्युज्या** स्त्री० द्युवृत्तस्याहोरात्रवृत्तस्य दलरूपायां ज्यायाम्। ''क्रान्तेः क्रमोत्क्रमज्ये द्वे कृत्वा तत्रोत्क्रमज्यया हीना त्रिज्या दिनव्यासदलं तद्दक्षिणोत्तरम्।''(सू सि०) स्पष्टक्रान्तेः क्रमोत्क्रमज्ये द्वे अपि प्रसाध्य तत्र तन्मध्ये क्रान्त्युत्क्रमज्यया त्रिज्या हीना, दिनव्यासदलमहोरात्रवृत्तस्य व्यासार्द्धं द्युज्येदीत्यर्थः।

**द्युपति** पु० दिनपतौ सूर्ये।

**द्युमणि** पु० दिवः स्वर्गस्य मणिरिव। सूर्य्ये।

**द्युवन्** पु० सूर्य्ये।

**द्रम्म** पु० लीलावत्युक्ते षोडशपणे– ''वराटकानां दशकद्वयं सा काकिणी ताश्च पणश्चस्रः। ते षोडश द्रम्म इहापि कीर्तितो द्रम्मैस्तथा षोडशभिश्च निष्कः।'' (लीला०)

**द्रोण** पु० खार्य्याः षोडशभागे। ''द्रोणस्तु खार्य्याः खलु षोडशांशः।''(लीला०)

**द्वादशात्मन्** पु० द्वादशात्मानो मूर्तयो यस्य। सूर्य्ये। द्वादशमेषादिराशयश्चास्य मूर्तयः। सूर्यसिद्धान्ते उक्तं यथा – सूर्य इत्युपक्रमे ''पुनर्द्वादशधात्मानं विभजन् राशिसंज्ञकम्।''(सू सि०)

**द्विगुणित** त्रि० द्वाभ्यां गुणितः। ''क्षेत्रस्य यस्य वदनं मदनारितुल्यं विश्वम्भरा द्विगुणितेन।''(लीला०)

**द्वितय** न० द्वयोरवयवः संख्यया। द्वित्वसंख्यया। ''कटाहद्वितयस्येव संपुटं गोलकाकृति।''(सि शि०)

**द्वीप** पु० न० द्विर्गता द्वयोर्वा दिशोर्गता आपोऽत्र। जलमध्यस्थस्थलभेदे वारिवेष्टिते तटभेदे अन्तरीक्षे। भूम्यां प्रधानद्वीपाच्च नवैव तेषां नामस्थानभेदाश्च सिद्धान्त–शिरोमणौ यथा – ''भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः।''(सू सि०)

**धटक** पु० ''तुल्या यवाभ्यां कथितात्र गुञ्जा वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ। गद्याणकस्तद्द्वयमिन्द्रतुल्यैर्वल्लैस्तथैको धटकः प्रदिष्टः।''लीलावत्युक्ते द्विचत्वारिंश–द्गुञ्जापरिमाणे। भारपरिमाणम्।

**धटिका** स्त्री० ''द्व्यङ्केन्दुसंख्यैर्घटकैश्च सेरस्तैः पञ्चभिः स्याद्धटिका च ताभिः।''(लीला०) लीलावत्युक्ते पञ्चसेरात्मके इति प्रसिद्धे परिमाणे।

**धन** न० युक्ते, योज्ये। ''स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहाः। तत् तेषु धनमित्युक्तमृणं पश्चान्मुखं तु।''(सू सि०)

**धनुस्** न० गोलक्षेत्रस्य व्यासार्द्धात् न्यूने अंशभेदे। ''ज्यां प्रोज्झ्य शेषं तत्त्वाश्विहतं तद्विवरोद्धृतम्। सङ्ख्यातत्त्वाश्विसंवर्गे संयोज्यं धनुरुच्यते।''(सू सि०) यस्य धनुः कर्त्तुमिष्टं तस्मिन्नवुद्धपूर्वं ज्यापिण्डं न्यूनीकृत्य शेषं पञ्चाकृतिगुणं तद्विवरोद्धृतं तयोः शुद्धाशुद्धपिण्डयोरन्तरेण भक्तं फलं शुद्धज्या यतमा ततमसङ्ख्यातत्त्वाश्विनोः संवर्गे घाते संयोज्य सिद्धं धनुः कथ्यते।

**धरण** त्रि० ''तुल्या यवाभ्यां कथिताऽत्र गुञ्जा वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ।''(लीला०) चतुर्विंशतिरत्तिकामिते मानभेदे।

**धात्री** स्त्री० धीयते पीयते। क्षितिः। ''मेखलेव स्थितो धात्र्या देवासुर विभागकृत्।'' (सू सि०)

**धामकेशिन्** पु० ज्योतिरूप केशो अस्य अस्तीति। ज्योतिर्मयकिरणयुक्ते सूर्ये।

**धृति** स्त्री० धारणे। विपुलाख्य विष्कुम्भपर्वतस्थे वनभेदे। ''वनं तथा चैत्ररथं विचित्रं तेष्वप्सरो नन्दननन्दनञ्च। धृत्याह्वयं यद् धृतिकृत् सुराणां भ्राजिष्णु वैभ्राजमिति प्रसिद्धम्।''(सि शि०)

**ध्रुव** त्रि० स्थिरे, गगने, शाश्वते। आकाशस्थिते ताराद्वये। ते च सर्वेषां नक्षत्रादीनामाधारभूते उत्तरदक्षिणयोः स्थिते। सूर्यसिद्धान्ते उक्ते यथा- ''मेरोरुभयतो मध्ये ध्रुवतारे नभस्थिते। निरक्षदेशसंस्थानामुभये क्षितिजाश्रये।''(सू सि०) मेरोरुभयतो दक्षिणोत्तराग्रयोराकाशस्थिते ध्रुवतारे दक्षिणोत्तरे क्रमेण मध्याकाशमध्ये भवतः। निरक्षदेशसंस्थानं प्रागुक्तनगरस्थितमनुष्याणामुभये दक्षिणोत्तरे ध्रुवतारे क्षितिजाश्रये तद्भूगर्भक्षितिजवृत्तस्थे भवत इत्यर्थः। शकुन्यादि करचतुष्के - ''ध्रुवाणि शकुनिर्नागं तृतीयं च चतुष्पदम्। किंस्तुघ्नं च चतुर्दश्याः कृष्णायाश्चापरार्द्धतः।''(सू सि०)

**ध्रुवक** पु० ग्रहाणां स्पष्टतोपयोगिनि अङ्कभेदे।

**नक्षत्र** न० न क्षीयते क्षरते वा। सप्तविंशति नक्षत्रेषु। १.अश्विनी २.भरणी ३.कृत्तिका ४. रोहिणी ५. मृगशिरा ६. आर्द्रा ७. पुनर्वसुः ८. पुष्या ९. आश्लेषा १०. मघा ११. पूर्वाफाल्गुनी १२. उत्तराफाल्गुनी १३. हस्ता १४. चित्रा १५. स्वाती १६. विशाखा १७. अनुराधा १८. ज्येष्ठा १९. मूला २०. पूर्वाषाढा २१. उत्तराषाढा २२.श्रवणा २३. धनिष्ठा २४. शतभिषा २५. पूर्वाभाद्रपदा २६. उत्तराभाद्रपदा २७.

रेवती। (उत्तराषाढा अन्तिमपादः श्रवणा प्रथमपादश्चमिलित्वा अभिजित् नक्षत्रम् भवति)

**नक्षत्रकान्तिविस्तार** पु० नक्षत्रकान्तीनां विस्तारो यत्र।

**नक्षत्रनाथ** पु० चन्द्रः। तस्य नक्षत्राधिष्टातृदक्षसुताश्विन्यादि नाथकत्वात् तथात्वम्।

**नक्षत्रभोग** पु० राशिचक्रस्थनक्षत्राणामेकैकदिने भोगः। २१६०० कलात्मकस्य सप्तविंशत्या समं विभक्तस्य ८०० शतकलारूपे भोगे। ''भभोगोऽष्टशती लिप्ताः।''(सू सि०)

**नक्षत्रसन्धि** पु० नक्षत्रयोः सन्धिः। पूर्वनक्षत्रादुत्तरनक्षत्रे चन्द्रादेर्ग्रहाणां वा नतिरूपसंक्रान्तौ।

**नक्षत्रसाधन** न० नक्षत्रं साध्यते ज्ञायते अनेनेति। ग्रहाणां नक्षत्रमानसाधने गणनभेदे।

**नत** त्रि० नम्रीभूते। येन कालेन मध्याह्नान्नतोरविस्तादृशे कालभेदे। ''मध्यच्छाया भुजस्तेन गुणिता त्रिभमौर्विका। स्वकर्णाप्ता धनुर्लिप्ता नतास्ता दक्षिणे भुजे। उत्तराश्वोत्तरे याम्यास्ताः सूर्यक्रान्तिलिप्तिकाः। दिग्भेदे मिश्रिताः सोम्ये विश्लिष्टा-श्चाक्षलिप्तिकाः।''(सू सि०) अभीष्टदिने माध्याह्निकी छाया भुजसंज्ञा ज्ञेया। तेन भुजेन त्रिज्या गुणिता मध्याह्नच्छायाकर्णेन भक्ता फलस्य धनुः कला नता नतसंज्ञास्ताः नतकला दक्षिणे भुजे मध्याह्नच्छायारूपभुजे प्राच्यापरसूत्रमध्याद्दक्षिणदिक्स्थे सति उत्तरदिक्का, उत्तरे भुजे दक्षिणाः।

**नति** स्त्री० चन्द्रार्ककक्षयोर्याम्योत्तरयोरन्तरे। यथोक्तं ''यत् पूर्वापरभावेन लम्बनाख्यं तदन्तरम्। यद् याम्योत्तरभावेन नतिसंज्ञं तदुच्यते।'' ''अथ याम्योत्तरायां तु भित्तौ पूर्वोक्तमालिखेत्। ये कक्षामण्डले तत्र ज्ञेये दृक्क्षेपमण्डले। त्रिभोनलग्नदृग्ज्या या स दृक्क्षेपो द्वयोरपि। तच्चापांशैर्नतौ विन्दू कृत्वा वित्रिभसंज्ञकौ। तल्लम्बनकलाः प्राग्वज्ज्ञेयास्ता नतिलिप्तिकाः। कक्षयोरन्तरं यत् स्यात् वित्रिभे सर्वतोऽपि तत्। याम्योत्तरं नतिः सात्र दृक्क्षेपात् साध्यते ततः।''(सि शि०)

**नभश्चक्षुस्** न० नभसश्चक्षुरिव प्रकाशकत्वात् । सूर्य्ये।

**नभश्चमस** पु० नभसश्चमस इव। चन्द्रे।

**नभोमण्डल** न० गगनमण्डले।

**नरयन्त्र** न० छायाद्वारा कालसाधके द्वादशाङ्गुलकीलरूप शङ्कुयन्त्रे। ''नरयन्त्रं तथा साधु दिने च विमले रवौ। छाया संसाधनैः प्रोक्तं कालसाधकमुत्तमम्।''(सू सि०) ''समतलमस्तकपरिधिर्भ्रमसिद्धो दन्तिदन्तजः शङ्कुः। तच्छायतः प्रोक्तं ज्ञानं दिग्देशकालानाम्।''(सि शि०)

**नाक्षत्र** न० नक्षत्राणामिदम्। नित्यं प्रत्यहं भचक्रभ्रमणं नाक्षत्रसमूहस्य प्रवाहवायुकृतं परिभ्रमः। नाक्षत्रं नक्षत्रसम्बन्धि नाक्षत्रमासदिनं मानज्ञैः कथ्यते। तद्घटितचक्रस्य परिवर्तनात्मके कालरूपे। दिनभेदे। ''नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्तितम्।''(सू सि०) ''भचक्र भ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।''(सू सि०)

**नाडी** स्त्री० साम्यभेदे। ''दशगुर्वक्षरः प्राणः षड्भिः प्राणैर्विनाडी स्यात्। तत्षष्ट्या तु भवेन्नाडी।''(सू सि०)

**नाडीवलय** न० नाडी घटिघकायाः ज्ञानार्थं वलयं वलयाकारं यन्त्रम्। सिद्धान्त-शिरोमणौ उक्तं यथा- लग्नादिज्ञानार्थे नाडीरूपकालज्ञानोपाये यन्त्रभेदे। ''अपवृत्ते कुजलग्ने लग्नं चाथो खगोलनलिकान्तः। भूस्थं ध्रुवयष्टिस्थं चक्रं षष्ट्या निजोदये-श्चाङ्क्यम्। व्यस्तैर्यष्टीभायामुदयेऽर्कं न्यस्य नाडिका ज्ञेयाः। इष्टच्छायासूर्यान्तरेऽथ लग्नं प्रभायां च। केनचिदाधारेण ध्रुवाभिमुखकीलकेऽत्र धृते। अथवा कीलच्छाया-तलमध्ये स्युर्नता नाड्यः।''(सि शि०)

**निखर्व** पु० अयुतकोटिसंख्यायाम्। अर्बुदमब्जं खर्वनिखर्वमहापद्म शङ्कवस्त-स्मात्।

**निघ्न** त्रि० निहन्यते। आहते, पूरिते। ''स्थाप्योऽन्त्यवर्गो द्विगुणान्त्य निघ्नः। पुनर्द्वादशनिघ्नाच्च लभते यत् फलं बुधैः।''(सू सि०)

**निदाधकर** पु० निदाध उष्णः करः। सूर्य्ये।

**निमीलन** न० अविकाशे। ''अप्राप्य च भवेत् पश्चादेवं वापि निमीलनात्।''(सू सि०)

**निमेष** पु० कालभेदे। ''द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः। निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कलाः। त्रिंशत् कला मुहूर्तः स्यात्। त्रुटिर्निमेषैर्धृतिभिश्च काष्ठा तत्त्रिंशता सद्गगणकैः कलोक्ता।''(सि शि०) योऽक्ष्णोर्लोचनयोः पक्षपातः स निमेषो स यावताकालेन निष्पाद्यते तावान् कालोऽपि निमेषशब्देनोच्यते उपचारात्।

**निरक्ष** त्रि० निर्गतः अक्षस्तदुन्नतिर्यस्मात्। अक्षोन्नतिशून्यदेशे स च देशः सूर्यसिद्धान्ते उक्तं यथा– ''समन्तात् मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादि नगर्यो देवनिर्मिताः। भूवृत्तपादे पूर्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का तन्महती पुरी। पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता। उदक् सिद्धपुरी नाम्ना कुरुवर्षे प्रकीर्त्तिता। भूवृत्तपादविवरास्ता–श्चान्योन्यं प्रतिष्ठिताः। ताभ्यश्चोत्तरगो मेरुस्तावानेव सुराश्रयः। तासामुपरिगो याति विषुवस्थो दिवाकरः। न तासु विषुवच्छाया नाक्षस्योन्नतिरुच्यते। मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते। निरक्षदेशसंस्थानामुभये क्षितिजाश्रये। अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः। नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा।''(सू सि०)

**निशामणि** पु० निशायां मणिरिव प्रकाशकत्वात्। चन्द्रे।

**निषध** पु० पर्वतभेदे। ''लङ्कादेशाद्धिमगिरिरुदग्धेमकूटोऽथ तस्मात् तस्माच्चान्यो निषध इति ते सिन्धुपर्यन्त दैर्घ्याः।''(सि शि०) अतो लङ्कया उत्तरतो हिमवान् नामगिरिः पूर्वसिन्धुपर्यन्तदैर्घ्योऽस्ति तस्योत्तरे हेमकूटः। सोऽपि समुद्रपर्यन्तदैर्घ्यः। तथा तदुत्तरे निषधः।

**निष्क** न० पु० निश्चयेन कायति। षोडशद्रम्मे परिमाणे। ''वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः। ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः।''(लीला०)

**नीलकमल** न० नीलं कमलम्। ''गणेशाय नमो नीलकमलामलकान्तये।''(लीला०)

**नेत्र** न० नयति नीयते वाऽनेन। द्वित्वसंख्यायाम्। ''मुनिषड्यमनेत्राणि(२२६७)''(सू सि०) सूर्यसिद्धान्ते ज्यार्धपिण्डोक्तौ।

**नैरन्तर्य्य** न० निरन्तरस्य भावः। ''नैरन्तर्य्यात्तु संक्रान्तेर्ज्ञेयं विष्णुपदीद्वयम्।''(सू सि०) पु० शुक्लकृष्णप्रतिपदादि पञ्चदश्यन्तपञ्चदशतिथ्यात्मके काले।

**पक्षसन्धि** पु० पक्षयोः सन्धिः। पर्वसन्धिकाले।

**पचत** पु० सूर्य्ये।

**पण** पु० परिमाणे। अशीति वराटकेषु। ''वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः।''(लीला०)

**पपौ** पु० चन्द्रे, सूर्य्ये।

**परक्रान्तिज्या** स्त्री० सूर्यसिद्धान्ते उक्तायां ''परमापक्रमज्या तु सप्तरन्ध्र-गुणेन्दवः।''१३९७ योजनात्मिकायां ज्यायाम्। ''क्रान्त्योर्ज्ये त्रिज्ययाभ्यस्तो परक्रान्तिज्ययोद्धृते ।''(सू सि०) त्र्यूनं चतुर्दशशतं परक्रान्तिज्येति रङ्गनाथः।

**परमापक्रमज्या** स्त्री० सूर्यसिद्धान्ते उक्तायां परमक्रान्तिज्यायाम्।

**परार्द्ध** न० चरमसंख्यायाम्। जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संख्याः। तस्य सर्वशेषतया उक्तेस्तथात्वम्। परस्य ब्रह्मणः आयुषोर्द्धम्। ब्रह्मणः आयुषो द्वितीयार्द्धे।

**परिग्रह** पु० स्वीकारे। राहुणा सूर्येन्दोर्ग्रहणे।

**परिधि** पु० चन्द्रसूर्यसमीपस्थ मेघादिसन्निकर्षात् जायमाने वेष्टनाकारे मण्डले। गोलमण्डलस्य परितो वेष्टनसूत्रमाने क्षेत्रभेदे।

**परिभ्रमण** न० परितो भ्रमणम्। सर्वतो भ्रमणे।

**परिमण्डल** त्रि० परिगतो मण्डलम्। वर्त्तुलाकारे।

**परिमाण** न० यवाङ्गुलप्रस्थादिभिर्गुञ्जादिभिश्च द्रव्यस्य परिच्छेदे। गुञ्जादि परिमाणभेद-विशेषाच्च।

**परि(री)वर्त्त** पु० विनिमये। आधारे। युगान्तकाले। युगानां परिवर्त्तेन। यत् स्थानमारभ्य ग्रहश्चलितः स चेत् पुनस्तत्स्थानमायाति तादृशे राशिचक्रस्य परिवर्त्ते च। ''तेषान्तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः।''(सू सि०)

**पर्वन्** न० दर्शान्तपौर्णिमान्तकालरूपे। ''चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा। पर्वाण्येतानि प्रोक्तानि रविसंक्रान्तिरेव च।'' स्मृति।

**पर्वसन्धि** पु० पर्वणोः सन्धिः। ''सैंहिकेयो यदा राहुर्ग्रस्ते पर्वसन्धिषु।'' पञ्च-दशीप्रतिपदोरन्तादिदण्डचतुष्ट्यात्मके काले। ग्रहणे इष्टकालः।

**पल** न० कालभेदे। ''दशगुर्वक्षरोच्चारकालः प्राणः षडात्मकैः। तैः पलं स्यात्तु तत्षष्ट्या दण्ड इत्यभिधीयते। विषुवद्दिनार्द्धे अक्षनतौ।'' पु०(सि शि०)

**पलभा** स्त्री० पलस्य अक्षस्य भा। अक्षभा नाम पलभा। विषुवद्दिनार्द्धजायां शङ्कु-च्छायायाम्। ''मेषादिगे सायनसूर्यभागे दिनार्द्धजा भा पलभा भवेत् सा। रेखा प्राच्यपरा साध्या विषुवद्भा ग्रहस्तया।''(सू सि०)




**पश्चिमोत्तरा** स्त्री० पश्चिमाया उत्तरस्या दिशोऽन्तराला दिक्। वायुकोणे।

**पाटी** स्त्री० परिपाट्यां गुणनादीनां स्पष्टक्रमे। ''अस्ति त्रैराशिकं बीजं पाटी च विमला मतिः।''(लीला०)

**पाटीगणित** न० पाट्या परिपाट्या गणितम्। लीलावत्याद्यङ्कशास्त्ररूपे गणित-शास्त्रे पाटी नाम सङ्कलितव्यवकलितगुणनभजनादीनां क्रमः तया युक्तं गणितं पाटीगणितम्।

**पात** पु० पातयति ग्रहमुत्तरा दक्षिणा वा। रविभिन्नग्रहाणां दक्षिणोत्तराकर्षके अदृश्यरूपे कालमूर्त्तिरूपे। ''दक्षिणोत्तरतोऽप्येवं पातो राहुः स्वरंहसा। विक्षिपत्येष विक्षेपं चन्द्रादीनमपक्रमात्।''(सू सि०)

**पाथ** न० थीयतेऽदः। सूर्य्ये।

**पिण्डित** त्रि० गणिते। गुणिते। गणके।

**पितृलोक** पु० चन्द्रलोकोपरिस्थे भुवनभेदे। ''विष्णूद्ध्र्वभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति। पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वं दर्शे यतोऽस्माद् द्युदलं तदैषाम्। भार्धान्तरत्वान्न विधोरधास्थं तस्मान्निशीथः खलु पौर्णमास्याम्। कृष्णरविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्।''(सि शि०) पितृरूपे लोके।

**पुण्यकाल** पु० पुण्यनिमित्तं कालः। रवेः स्थिरसंक्रान्तौ रव्यादीनां चलसंक्रान्तौ च विहितस्नानदानादौ पुण्यजनके कालभेदे।

**पुलिश** पु० ज्योतिषसिद्धान्तकारके ऋषिभेदे। तत्र ग्रहगणितभेदे पौलिशरोमक–वासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु। पौलिश तत्कृतसिद्धान्ते।

**पूर्णिमा** स्त्री० कलापूर्णचन्द्रो मीयते अस्याम्। पूर्णमास्या तिथौ।

**पूर्णमास्** स्त्री० पूर्णः कलाभिः पूर्णिमाचन्द्रमा यत्र। पूर्णिमायाम्।

**पूर्णेन्दु** पु० पञ्चदशभिः कलाभिः पूर्णे चन्द्रे।

**पूर्वदिग्बल** न० सूर्य्यादिग्रहाणां कालभेदे, पूर्वस्यां दिशिभवे बलभेदे।

**पूर्वदिश्** स्त्री० प्राच्यां दिशि। यस्यां दिशि येषां सूर्य्यस्य प्रथमदृष्टिः तेषां सा दिक्प्राची।

**पूषन्** पु० सूर्य्ये। आदित्यभेदे।

**पौर्णमास** पु० पौर्णमास्यां भवः सन्धिवेला।

**प्रजापति** पु० सूर्य्ये।

**प्रतिपद** स्त्री० प्रतिपद्यते उपक्रम्यते पक्षोमासो वाऽनया। पक्षयोः प्रथमायां तिथौ।

**प्रतिमण्डल** पु० प्रतिरूपं मण्डलम्। सूर्य्यादिमण्डलस्य परिधौ।

**प्रत्यगुदच्** पु० प्रतीच्या उदीच्याच्च अन्तराला दिक्। पश्चिमोत्तरदिशोरन्तरालायां विदिशि वायुकोणे।

**प्रद्योत** पु० रश्मौ।

**प्रपित्वे** अव्य० उत्तरायणे।

**प्रभाकर** पु० प्रभां करोति। सूर्य्ये, चन्द्रे।

**प्रभास** त्रि० प्रकृष्टदीप्तियुक्ते।

**प्रयुत** न० दशलक्षसंख्यायाम्। तत्संख्याते च। लक्षप्रयुतकोटयः क्रमशः।

**प्रहनेमि** पु० प्रहन्ति तादृशो नेमिरिवाग्रं शृङ्गमस्य। चन्द्रे। दिवसस्याष्टमे भागे।

**प्रहर्षण** त्रि० प्रहर्षयति। प्रहर्षेण हर्षकारके। बुधग्रहे।

**प्राक्छाय** त्रि० प्राक् पूर्ववर्तिनी छाया यत्र दिने।

**प्राक्सन्ध्या** स्त्री० पूर्वसङ्ख्यायाम् सूर्योदयासन्नायाम्।

**प्राजेश** न० प्रजेशो देवताऽस्य। रोहिणी नक्षत्रे।

**प्रातःसन्ध्या** स्त्री० सन्धौ भवः यत् सन्ध्या। गतरात्रेरनन्तरं मुहूर्तात्मके भावि-सूर्य्योदयस्य मध्यवर्तिनि। दण्डचतुष्टयात्मके वा काले। ''त्रियामां रजनी प्रास्त्यक्त्वाद्यन्तचतुष्टयम्। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते।''

**प्रालेयांशु** पु० प्रलयमंशौ यस्य। चन्द्रः।

**प्रावृष्(षा)** स्त्री० प्रवृष्यतेऽत्र। वर्षाकाले स च श्रावणभाद्रात्मकः।

**प्रो(प्रौ)ष्ठपदा** स्त्री० चान्द्रभाद्रमासे। तद्युक्ता पौर्णमासी।

**फणीश्वरचक्र** न० नक्षत्रभेदे। शनिस्थित्या सप्तद्वीपस्य शुभाशुभसूचके चक्रभेदे।

**फलकयन्त्र** न० सिद्धान्तशिरोमणौ उक्ते यन्त्रभेदे यथा - ''कर्तव्यं चतुरस्रकं सुफलकं खाङ्काङ्गुलैर्विस्तृतम्। विस्तारात् द्विगुणायतं सुगणकेनायाममध्ये तथा। आधारः श्लथशृङ्खलादिघटितः कार्य्यां च रेखां ततस्त्वाधारादवलम्बसूत्रसदृशी सा लम्बरेखोच्यते। लम्बं नवत्यङ्गुलैर्विभज्य प्रत्यङ्गुलं तिर्य्यगतः प्रसार्य्य। सूत्राणि तत्रायतसूक्ष्मरेखा जीवाभिधानाः सुधिया विधेयाः। आधारतोऽधः खगुणाङ्गुलेषु ज्यालम्बयोगे सुषिरं च सूक्ष्मम्। इष्टप्रमाणा सुषिरे शलाका क्षेप्याऽक्षसंज्ञा खलु सा प्रकल्प्या। षष्ट्यङ्गुलव्यासमतश्च रन्ध्रात् कृत्वा सुवृत्तं परिधौ तदङ्क्यम्। षष्ट्या

घटीनां भगणांशकैश्च प्रत्यंशकं चाम्बुपलैश्च दिग्भिः। अग्रे सरन्ध्रा तनुपट्टिकैका षष्ट्यङ्गुला दीर्घतया तथाह्यम्।''(सि शि०)

**फाल्गुनी** स्त्री० अश्विन्यादधिके एकादशे द्वादशे च नक्षत्रे। पूर्वाफाल्गुनी, उत्तराफाल्गुनी।

**फाल्गुन** पु० फल्गुनीयुक्ता पौर्णमासी। चैत्राधिके द्वादशे स्वनामख्याते मासभेदे।

**फाल्गुनिक** पु० फाल्गुनीनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे।

**बहुक** पु० कर्कटे। सूर्य्ये।

**बार्हस्पत** पु० बृहस्पतेरिदम् । गुरुसम्बन्धिनि वत्सरे। ''बार्हस्पत्येन षष्ट्यंशं ज्ञेयं नान्यैस्तु नित्यशः।''(सू सि०)

**बालार्क** पु० प्रातःकालीन सूर्य्ये।

**बालुकायन्त्र** न० कालज्ञापकयन्त्रभेदः। ''ससूत्ररेणुगर्भैश्च सम्यक् कालं प्रसाधयेत् ''(सू सि०) सूत्राकारेण रेणवः सिकतांशगर्भे उदरे यस्यैतादृशं यन्त्रं बालुकायन्त्रं प्रसिद्धम्।''

**ब्रह्माण्ड** न० ब्रह्मणः उत्पादके अण्डाकारे भुवनकोषे। तत्संख्या च सूर्यसिद्धान्ते दर्शितं यथा–''वासुदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः। अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः। प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः। सङ्कर्षणोऽपः सृष्ट्वादौ तासु वीर्यमवासृजत्। तदण्डमभवद्धैमं सर्वत्र तमसावृतम्। तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः। हिरण्यगर्भो भगवानेष छन्दसि पठ्यते। आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते। परं ज्योतिस्तमःपारे सूर्योऽयं सवितेति च। पर्येति भुवनान्येष भावयन् भूतभावनः। '' इत्युपक्रमे ''गुणकर्मविभागेन सृष्ट्वा प्राग्वदनुक्रमात्। विभागं कल्पयामास यथास्वं वेददर्शनात्। ग्रहनक्षत्रताराणां भूमेर्विश्वस्य वा विभुः। देवासुर–मनुष्याणां सिद्धानां च यथाक्रमम्। ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम्। कटाहद्वितयस्यैव सम्पुटं गोलकाकृति। ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाऽभिधीयते। तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा। मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः। उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा

महर्षयः। अधस्तादसुरास्तद्वद्विषन्तोऽन्योन्यमाश्रिताः। ततः समन्तात् परिधिः क्रमेणायं महार्णवः। मेखलेव स्थितो धात्र्या देवासुरविभागकृत्। समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादिनगर्य्यो देवनिर्मिताः। भवृत्तपादे पूर्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणां। याम्यायां भारते वर्षे लङ्का तद्वतन्महापुरू। पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्तिता। उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्तिता। तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः।''(सू सि०)

**भकक्षा** स्त्री० नक्षत्रकक्षायाम्। ''भवेत् भकक्षा तीक्ष्णांशोर्भ्रमणं षष्टिताडितम्। सर्वोपरिष्टाद्भ्रमति योजनैस्तैर्भमण्डलम्।''(सू सि०)''सूर्यस्य भ्रमणं कक्षापरिधिमानं योजनात्मकम्'' ''खखार्थैकसुरार्णवाः इति वक्ष्यमाणं षष्ट्यागुणितं सत् नक्षत्राणां कक्षा नक्षत्राधिष्ठितगोलस्य मध्यवृत्तं स्यात्। तैर्नक्षत्रकक्षामितैर्योजनैर्भमण्डलं नक्षत्राधिष्ठितगोलमध्यवृत्तं सर्वोपरिष्टाच्चन्द्रादिसप्तग्रहेभ्य उपरि दूरं भ्रमति भूगो-लादभितः परिभ्रमति।''

**भग** पु० न० सूर्य्ये। चन्द्रे।

**भगण** पु० द्वादशराशीनां समूहे। तद्भोगकाले च। ''पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः। जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः। प्राग्गतित्वमतस्तेषां भगणं प्रत्यहं गतिः। परिणाह वशाद्भिन्ना तद्वशाद्भानि भुञ्जते। शीघ्रगस्तान्यथाल्पेन कालेन महताल्पगः। तेषां तु परिवर्तेन पौषान्ते भगणः स्मृतः। विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते। तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ।।''(सू सि०)

**भगोल** पु० भानां नक्षत्राणां गोलाकारः पदार्थः। राशिचक्रे तस्य भ्रमणादिकं सूर्यसिद्धान्ते उक्तं यथा-''सव्यम् भ्रमति देवानामपसव्यं सुरद्विषाम्। उपरिष्टात् भगोलोऽयं व्यक्षे पश्चान्मुखः सदा।''(सू सि०) ''अयं प्रत्यक्षो भगोलो नक्षत्राधिष्ठित-मूर्तगोलो देवानां मेरोरुत्तराग्रवर्तिनां सव्यं पूर्वादिक्रममार्गेणेत्यर्थः। भ्रमति भ्रमं परिवर्तं करोतीत्यर्थः। दैत्यानां मेरोर्दक्षिणभागवर्तिनामपसव्यं पूर्वादिदिग्व्युत्क्रमेण मार्गेण च। पूर्वोत्तरपश्चिमदक्षिणक्रमेणेत्यर्थः। नक्षत्राधिष्ठितगोलो भ्रमति। उपरिष्ठात् मस्तकोर्ध्वमध्यभागो भगोलः। पश्चान्मुखः पश्चिमदिगभिमुखः सदा नित्यं परिभ्रमति। भगोलस्य ध्रुवमध्यस्थत्वेन भ्रमणात् तयोस्तत्र क्षितिजवृत्तस्थत्वाच्च।।''

**भचक्र** न०  भानां नक्षत्राणां राशीनां वा चक्रम्। राशिचक्रे। नक्षत्रचक्रे।

**भद्रतुरग** न०  भद्रास्तुरगा यत्र। जम्बूद्वीपस्य नववर्षमध्ये वर्षभेदे। ''माल्यव-ज्जलधिमध्यवर्त्ति यत्तत्तु भद्रतुरग जगुर्बुधाः।''(सि शि०)

**भपति** पु०  नक्षत्रेशे चन्द्रे। राशीश्वरे मङ्गलादौ।

**भमण्डल** न०  राशिचक्रे।

**भसन्धि** पु०  नक्षत्रभेदानां सन्ध्यात्मके कालभेदे। ''सार्पेन्द्रपौष्ण्यधिष्ण्यानामन्त्याः पादाः भसन्धयः। तदग्रभेष्वाद्यपादा गण्डान्तं नाम कीर्त्यते।''(सू सि०) आश्लेषा ज्येष्ठा रेवती नक्षत्राणामन्त्याश्चतुर्थाश्चरणाः नक्षत्रसन्धयो भवन्ति। तदग्रभेषु तेषामाश्लेषाज्येष्ठारेवती नक्षत्राणामुत्तरेषु मघामूलाश्विनीनक्षत्रेष्वित्यर्थः प्रथमचरणो गण्डान्तं नाम प्रसिद्धमुच्यते।

**भसूचक** पु०  भानि नक्षत्राणि सूचयति इति।

**भागजाति** स्त्री०  भागस्य विभजनस्य प्रकारभेदे। सा च चतुर्विधाभागजातिः, प्रभागजातिः,भागानुबन्धः,भागापवाहश्च। तत्र अंशानां समच्छेदकरणं भागजाति-रित्युच्यते। यथा - ''अन्योऽन्यहराभिहतौ हरांशै राश्योः समछेदविभागमेवम्। मिथो हराभ्यामपर्त्तिताभ्यां यद्वा हरांशौ सुधियात्र गुण्यौ''। भागस्य भागः प्रभागो यथा - ''लवा लवघ्नाश्च हराहरघ्नाः भागप्रभागेषु सवर्णनं स्यात्''। भागस्यानुबन्धो योजनम्। भागानुबन्धो भागावाहश्च तद्वियोजनं यथा - ''छेदघ्नरूपेषु लवा धनर्णमेकस्य भागा अधिकोनकाश्चेत्। स्वांशाधिकोनः खलु यत्र तत्र भागानुबन्धे च लवापवाहे। तलस्थहारेण हरं निहन्यात् स्वांशाधिकोनेन न तु तेन भागान्।'' (लीला०)

**भाद्र** पु०  भद्राभिर्युक्ता पौर्णमासी भाद्री सा यस्मिन् मासे।

**भाद्रपदा** स्त्री०  भाद्रमिव पदमासम्। अश्विन्यवधिके पञ्चविंशषड्विंशयोर्नक्षत्रयोः। तद्युक्ता पौर्णमासी। भाद्रमासस्य पौर्णमास्याम्।

**भानुमत्** स्त्री०  भानुः किरणोऽस्त्यस्य। सूर्य्ये।

**भानेमि** पु०  भानोः नेमिरिव। सूर्य्ये।

**भान्त** पु० भायाः दीप्तेः पञ्चदशाहमध्ये अन्तो यस्य। शुक्लकृष्णपक्षयोः पञ्चदशाहमध्ये कान्तेरुपचयापचययुक्ते चन्द्रे।

**भासन्त** पु० सूर्य्ये। चन्द्रे। नक्षत्रे।

**भासु** पु० सूर्य्ये।

**भास्कर** पु० भासं करोति इति। सूर्य्ये।

**भास्करि** पु० भास्करस्य अपत्यं पुमान् । शनिः।

**भास्वत्** पु० सूर्य्ये। यत्र सूर्यग्रहणादि निरूपणमस्ति।

**भास्वर** त्रि० दीप्तियुक्ते। सूर्य्ये।

**भिन्नगुणन** न० लीलावत्युक्ते पूरणभेदे। ''अंशाहतिश्छेदवधेन भक्ता लब्धं विभिन्ने गुणने फलं स्यात्।।''(लीला०)

**भिन्नपरिकर्मन्** न० लीलवत्युक्ते सच्छेदस्य सङ्कलनस्यवा कलनादिरूपाङ्गसंस्का–राष्टके।

**भुज** पु० स्त्री० लीलावत्यादौ त्रिकोणचतुष्कोणादिक्षेत्रप्रसिद्धे क्षेत्रांशभेदे। ''तथायते तद्भुजकोटिघाताः।''(लीला०) इति

**भुजकोटर** पु० भुजस्य कोटर इव। कक्षदेशे।

**भुजज्या** स्त्री० त्रिकोणक्षेत्रस्य भुज जीवायाम्। ''ग्रहं संशोध्य मन्दोच्चात् तथा शीघ्रात् विशोध्य च। शेषं केन्द्रपरं तस्माद्भुजज्या कोटिरेव च।।''(सू सि०)

**भुजफल** न० ''स्वेनाहते परिधिना भुजकोटिजीवे भांशैः हृते च भुजकोटिफलाह्वये स्तः।''(सि शि०) सिद्धान्तशिरोमणि उक्ते भुजेनानीते फलभेदे।

**भुजान्तर** न० भुजयोरन्तरं मध्यम्। वृत्तक्षेत्रजवाङ्गोर्विश्लेषरूपे गणितागते पदार्थे। ''भानोः फलं गणितमर्कयुतस्य राशेर्व्यक्षेदयेन खखनागमही विभक्तम्। गत्या ग्रहस्य गुणितं द्युनिशा विभक्तं स्वर्णं ग्रहेऽर्कवदिदं तु भुजान्तराख्यम्।''(सि शि०)

**भुव** पु० भुवोलोके। ''तत्रेदं भूर्भुवादिकम्।''(सू सि०)

**भूगोल** पु० भूर्गोल इव। गोलाकारे मण्डले ''मध्ये समन्नादण्डस्य भूगोलो व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारायात्मिकाम्।''(सू सि०)

**भूच्छाया** स्त्री० भुवच्छाया। सूर्यकिरणासम्पर्कात् जायमाने राहुग्रहाभिधाने तमसि अन्धकारे।

**भूपरिधि** पु० भूमेः परिधौ। ''योजनानि शतान्यष्टौ भूकर्णो द्विगुणानि तु। तद्वर्गतो दशगुणात् पदं भूपरिधिर्भवेत्'' ''लम्बज्याघ्नस्त्रि जीवाप्तः स्फुटो भूपरिधिः स्वकः''(सू सि०) ''प्रोक्तो योजनसंख्यया कुपरिधिः सप्ताङ्गनन्दाब्धयस्तद्व्यासः कुभुजङ्गशायकभुवः सिद्धांशकेनाधिकः। पृष्ठक्षेत्रफलं तथा युगगुणत्रिंशच्छ-राष्ट्रादयो। भूमेः कन्दुकजालवत् कुपरिधि व्यासाहतेः प्रस्फुटम्।''(सि शि०)

**भूमि(मी)** स्त्री० भवन्त्यस्मिन् भूतानि।

**भूमिसम्भवा** स्त्री० भूमिः सम्भवोऽस्याः। भूमिजातमात्रे। मङ्गलग्रहे।

**भूसुत** पु० मङ्गलग्रहे।

**भौम** पु० भूमेरपत्यं तस्या इदम्। मङ्गलग्रहे।

**मकरसंक्रान्ति** स्त्री० मकरे राशौ रवेः संक्रमणे। तदुपलक्षितपुण्यकालोपलक्षिते च दिने।

**मघाभू** पु० मघासन्निकटे ऋक्षे। पूर्वाफाल्गुनीजाते शुक्रग्रहे।

**मङ्गल** पु० भूमिसुते ग्रहभेदे।

**मण्डल** न० चक्राकार वेष्टने। सूर्य्यमण्डलम्, भूमण्डलम्, ग्रहमण्डलम्, भद्रमण्डल-मित्यादि।

**मध्य** पु० न० ग्रहाणां गतिभेदे। पूर्वापरसीमयोरन्तराले। सङ्ख्यायाम्। ''अन्त्यं मध्यं परार्द्धम्।''(सि शि०)

**मध्यमाहरण** न० बीजगणितप्रसिद्धे अव्यक्तमानज्ञापके।

**मन्द** त्रि० रविसंक्रान्तिभेदे। ग्रहगतिभेदे च ।

**मन्दग** त्रि० मन्दं गच्छतीति। शनिग्रहे। स्वभान्मन्दगतयः।

**मलमास** पु० मलो दुष्टो मासः। ''अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम्। मलमासः स विज्ञेयः'' इत्युक्ते रविसंक्रान्तिशून्ये शुक्लप्रतिपदादिदर्शान्तरूपे चान्द्रे मासे।

**महाविषुव** न० रवेर्मेषसंक्रमणे। तत्संक्रमणञ्च स्वरूपतः संक्रमणं प्रभापुञ्जस्य संक्रमणं वा। तत्र प्रभापुञ्जसंक्रमणमयनांशानुसारेण अष्टमासाधिकषट्षष्टि-

वत्सरैरंकैकांशं परित्यज्य ततः पश्चात्पश्चात्परादौ स्थाने भवति। इदानीं च पश्चादयनं पूर्वायने तु पूर्वापूर्वतरादौ स्थाने भविष्यति। इत्यतस्तश्चलमनियतस्थानत्वात् स्वरूप-संक्रमस्तु स्थिरः सर्वदैकस्थाने जायमानत्वात् ।

**म(मि)हिर** पु० सूर्य्ये।

**महीज** न० मह्या जायते। मङ्गलग्रहे।

**मागधखारिका** स्त्री० लीलावत्युक्ते खरिकाभेदे।

**माघ** पु० मघानक्षत्रयुक्ता पौर्णमासी। चैत्रावधिके एकादशे चान्द्रमासे। तत्पौर्णमास्याम्।

**मार्गशिर** पु० मृगशिरया युक्ता पौर्मणासी। सा यत्र मासे। चान्द्रे। अग्रहायणे मासि। तत्पौर्णमास्याम्।

**मार्गशीर्ष** पु० साधने मार्गशिरवत्। अग्रहायणे मासि। तत्पौर्णमास्याम्।

**मार्त्तण्ड** पु० मृते अण्डे भवः। सूर्य्ये। तस्य मृताण्डजन्म च । ''मारितश्च यतः प्रोक्तमेतदण्डं त्वयोदित। तस्मान्मुने सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति।'' मार्क० पु०।

**मास** पु० मस्यते परिमीयतेऽनेन इति मासः। त्रिंशद्दिनात्मके काले। चन्द्रे। स च सौरसावनचान्द्रनाक्षत्रभेदाच्चतुर्विधः। चान्द्रे मासे तु मुख्यः।

**मासप्रमित** पु० मासं प्रमातुमारब्धः। प्रतिपच्चन्द्रे।

**मासान्त** पु० मासस्य सौरस्य चान्द्रस्य वाऽन्तः।

**मासिक** त्रि० मासे भवः।

**माहेन्द्र** पु० महेन्द्रस्यायम्। पूर्वस्यां दिशि।

**मित्र** पु० सूर्य्ये।

**मिश्रव्यवहार** पु० लीलावत्युक्ते गणनाभेदे।

**मिहिर** पु० सूर्य्ये। वायौ। चन्द्रे च ।

**मुहूर्त्त** स्त्री० द्वादशक्षणमिते काले। पञ्चदशधा विभक्तस्य दिनस्य पञ्चदशभागे। किञ्चिन्न्यूनाधिक घटिकाद्वयरूपे काले।

**मृगराज** पु० मृगाणां पशूनां राजा। सिंहे। चन्द्रे। सिंहराशौ। मृगशिरानक्षत्रात्।

## तृतीयोऽध्यायः

### 'य' वर्गः

**यन्त्र** न० चक्रभेदे। ज्योतिश्चक्राद्यवेक्षणसाधने। डमरुयन्त्रम् – ''यन्त्रं डमरुसंज्ञं स्यात्तत्स्थाल्योर्मुद्रिते मुखे।''कालज्ञानार्थे सूर्यसिद्धान्ते उक्ते पदार्थभेदे। यथा – ''कालसंसाधनार्थाय तथा यन्त्राणि साधयेत् । एकाकी योजयद्बीजं यन्त्रे विस्मयकारिणी। शङ्कुयष्टिधनुश्चक्रैश्छायायन्त्रैरनेकधा। गुरूपदेशात् विज्ञेयं काल–ज्ञानमतन्द्रितैः।''(सू सि०) शङ्कुयष्टिधनुश्चक्रैः प्रसिद्धैः च्छायायन्त्रैः च्छाया–साधकयन्त्रैरनेकधा नानाविधगणितप्रकारैः गुरूपदेशात् अतन्द्रितैः अभ्रमैः पुरुषैः कालज्ञानं दिनगतादिज्ञानं सूक्ष्मत्वेनावगन्तव्यम्। एतत् सर्वं सिद्धान्तशिरोमणौ भास्कराचार्यैः स्पष्टीकृतम्।

**यन्त्रगोल** पु० यन्त्रमिव ज्योतिचक्राकृतिगोलयन्त्रमिव गोलः वर्त्तुलः।

**यमकोटि** पु० स्त्री० भूगोलस्य चतुर्थपादान्तरिते लङ्कातः पूर्वस्यां स्थितायां देवनिर्मितायां पुर्य्याम्।

**यव्य** न० यवानां भवनं क्षेत्रम्। युतचन्द्रार्कावत्र। चान्द्रे मासे।

**यामी** स्त्री० यमस्येयम्। यमो देवतास्या वा तस्येयम्। दक्षिणस्यां दिशि। भरणी–तारायां च।

**याम्यायन** न० याम्यायाम् अयनं सूर्यस्य गतिः। सूर्यस्य दक्षिणायने। तदाधारेषु रवेः मृगसंक्रान्तितः परेषु षट्सु मासेषु।

**याम्योद्भूत** पु० याम्ये दक्षिणदेशे उद्भूताः।

**युग** न० द्वित्वसंख्यान्विते सत्यत्रेताद्वापरकलिरूपे कालविशेषे।

**युद्ध** न० ग्रहाणां मतिभेदकृते योधनरूपे। परस्परमिलनविशेषे। ग्रहयुद्धे।

**रजत** पु० सूर्य्ये।

**रजनीकर** पु० रजनीं करोति इति। चन्द्रे।

**रजनीमुख** न० प्रदोषे सूर्य्यास्तकालात् चतुर्दण्डात्मके मुहूर्तात्मके काले।

**रवि** पु० सूर्य्ये। ''अचिरात्तु प्रकाशेन अवनात् स रविः स्मृतः'' ।

**रविज** पु० रवेर्जायते। शनिः। रवितनयः।

**राका** पु० प्रतिपदयुक्तायां पूर्णमास्यां सम्पूर्णेन्दुतिथौ।

**रात्रि(त्री)** स्त्री० रजन्यां नृणां स्वखदेशापेक्षया सूर्यमण्डलस्य अदर्शनयोग्ये काले। ''मासेन च मनुष्याणां पितृणां तदहर्निशम्। कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्त्तिताः'' उक्ते पितृणां शुक्लपक्षरूपे काले। ''उत्तरायणो दिनं प्रोक्तं रात्रिः स्यात् दक्षिणायने'' इत्युक्ते देवानां दक्षिणायनरूपे काले।

**रात्रिकर** पु० रात्रिं करोति इति। चन्द्रे।

**रात्रिमणि** पु० रात्रौ मणिरिव दीप्तिमत्वात्। चन्द्रे।

**राध** पु० राधा विशाखा तत्समीपस्था अनुराधा च तद्युक्ता पौर्णमासी। चान्द्रे वैशाखे मासि। गुरुवर्षे। तत्पूर्णिमायाम्।

**राशि** पु० अश्नुते व्याप्नोति इति। ज्योतिश्चक्रस्य द्वादशांशे। मेषादौ। ''दृश्ये राशिप्रसिद्धये'' इति।

**राहुदर्शन** पु० राहोर्दर्शनं यत्र। चन्द्रसूर्ययोरुपरागरूपे ग्रहणे।

**राहुस्पर्श** न० राहोः स्पर्शः स्वाधिष्ठितभूच्छायाद्वारा यत्र चन्द्रसूर्ययोः उपरागरूपे ग्रहणे।

**रिक्ता** पु० कृष्णपक्षशुक्लपक्षयोः चतुर्थी – नवमी – चतुर्दशी तिथयः। नन्दा (१,६,११), भद्रा (२,७,१२), जया(३,८,१३), रिक्ता(४,९,१४), पूर्णा(५,१०,१५) तिथयः।

**रेखागणित** न० रेखायाः गणितं प्रमाणस्वरूपादि यत्र। जगन्नाथपण्डितकृते गणितग्रन्थभेदे।

**रेखापुर** न० भुवो मध्यसूत्रस्थः पुरम्। ''राक्षसालयदेवौकः शैलयोर्मध्यसूत्रगाः। रोहीतकमवन्ती च तथा सन्निहितं सरः।''(सू सि०)

**लम्ब** पु० भुजकर्णयोर्मध्यस्थे लम्बमाने। ''शङ्कुर्नरो ना कथितः स एव खार्धाद्रिवर्या विषुवद्दिनार्धे। नतिः पलोऽक्षश्च स एव तज्ज्ञैस्तत्रोन्नतिर्यास्थ स एव लम्बः।'' (सि शि०)

**ललाटन्तप** पु० ललाटं तापयति इति। सूर्य्ये।

**लव** पु० लेशे। कालपरिमाणभेदे।

**लीलावती** स्त्री० भास्कराचार्यस्य अङ्कग्रन्थभेदे।

**लोकबान्धव** पु० लोकानां बान्धवः। सूर्य्ये।

**लोकलोचन** पु० सूर्य्ये।

**लोहितक** न० मङ्गलग्रहे।

**वचसांपति** पु० वाक्पतिः। बृहस्पतौ।

**वर्ग** पु० अङ्कशास्त्रोक्ते समानाङ्कद्वयस्य परस्परगुणने। यथा द्विकस्य चत्वारि, त्रिकस्य नव, चतुष्कस्य षोडश इत्यादि। ''स्थाप्योऽन्त्यवर्ग'' ''वर्गं मूलं पदं कृतिम्।''(लीला०)

**वर्गप्रकृति** स्त्री० बीजगणितोक्ते गणनाप्रकारभेदे।

**वर्त्तुल** त्रि० गोलाकारे पदार्थे।

**वर्ष** पु० जम्बूद्वीपांशभेदे। ''लङ्कादेशाद्धिमगिरिरुदग्धेमकूटोऽथ तस्मात् तस्माच्चान्यो निषध इतित ते सिन्धुपर्यन्नदैर्घ्याः। एवं सिद्धादुदगपि पुराच्छङ्गवच्छुक्लनीला वर्षाण्येषां जगुरिह बुधा अन्तरे द्रोणिदेशान्। भारतवर्षमिदं ह्युदगस्मात् किन्नरवर्षमतो हरिवर्षम्। सिद्धपुराच्च तथा कुरु तस्माद्विद्धि हिरण्यमयरम्यकवर्षे। ''माल्यवांश्च यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः। नीलशैलनिषधावधी च तावन्तराल-मनयोरिलावृतम्। माल्यवज्जलधिमध्यवर्त्ति यत् यत् तु भद्रतुरगं जगुर्बुधाः। गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः। निषधनीलसुगन्धसुमाल्य-कैरलमिलावृतमावृतमावभौ। अमरकेलिकुलाससमाकुलं रुचिरकाञ्चन-चित्रमहीतलम्।।''(सि शि०) अत्र भूगोलस्यार्द्धमुत्तरं जम्बूद्वीपम्। तस्य क्षाराब्धेश्च सन्धिः निरक्षदेशः। तत्र लङ्का, रोमकं, सिद्धपुरं, यमकोटिरिति पुरचतुष्टयम्। भूपरिधि

तु चतुर्थांशान्तरे किल कथितम्। तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सा उत्तरा। अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः। पूर्वापर सिन्धुपर्यन्त दैर्घ्यो अस्ति। तस्योत्तरे हेमकूटः। तथा तदुत्तरे निषधः। तेषामन्तरे द्रोणिदेशा वर्षसंज्ञा। तत्रादौ भारतवर्षम्। तदुत्तरं किन्नरवर्षम्। ततो हरिवर्षमिति। एवं सिद्धपुरादुत्तरतः शुद्धवान् नाम गिरिः। ततः श्वेतगिरिः। ततः नीलगिरिरिति। तेऽपि सिन्धुपर्य्यन्तदैर्घ्याः। तेषामन्तरे च वर्षाणि। तेषु आदौ कुरुवर्षम्। तदुत्तरे हिरण्यमयम्। ततो रम्यकमिति। अथ यमकोटेरुत्तरतो माल्यवातनामगिरिः। स तु निषधनीलपर्यन्तदैर्घ्यः। तस्य जलधेश्च मध्ये भद्राश्वं वर्षम्। एवं रोमकादुत्तरतो गन्धमादनः। तस्य जलधेश्च मध्ये केतुमालवर्षम् । एवं निषधनीलमाल्यवगन्धमाद्रैरावृतमिलावृतं नाम वर्षं नवमम् सा स्वर्गभूमिः। अतस्तत्र देवक्रीडागृहाणि।'' द्वादशमासात्मके काले।

**वर्षपर्वत** पु० जम्बूद्वीपादि पर्वताः।

**वलन** न० दृक्कर्मादिसंस्काराः। कदम्बयाम्योत्तरोयन्तरम्।

**वलय** पु० न० तदाकार वेष्टने यथा भूवलयम्। गोले च ।

**वल्ल** पु० गुञ्जत्रयपरिमाणे। ''वल्लस्तगुञ्ज'' ''गोधूमद्वितयोन्मिता तु कथिता गुञ्जा तया सार्द्धया वल्लः।।''(लीला०)

**वाक्पति** पु० बृहस्पतौ। पुष्यानक्षत्रे च।

**वाजसनि** पु० सूर्य्ये। ''आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः'' तस्य वृष्टिद्वार अन्नदातृत्वात् तथात्वम्।

**वाति** पु० वायौ। सूर्य्ये। चन्द्रे।

**वार** पु० खयोग्यकाले। सूर्यादिग्रहाधिकृते दिने। यथा रविवारः रविस्वामिकं दिनम्। तदानयनञ्च सूर्यसिद्धान्ते उक्तं यथा – ''मन्दादधः क्रमेण स्युः चतुर्था दिवसाधिपाः। वर्षाधिपतयस्तद्वत् तृतीयाच्च प्रकीर्तिताः। ऊद्ध्वक्रमेण शशिनो मासानामधिपाः स्मृताः। होरेशाः सूर्यतनयादधोऽधाक्रमतस्तथा।''(सू सि०)

**विक्षेप** पु० त्यागे। विमण्डले यत् ग्रहस्थानं तस्य क्रान्तिवृत्ताद् यत् तिर्य्यगन्तरं स विक्षेपः। शरे च ।

**विद** पु० बुधग्रहे। पण्डिते।

**विनाडिका** स्त्री० विभक्ता नाडिका यया। ''दश गुर्वक्षरः प्राणः। षड्भिर्प्राणै-र्विनाडिका। तत्षष्ट्या तु भवेन्नाडी।''(सू सि०) दण्डषष्टिर्भागात्मके पलरूपे काले।

**विम्बा(म्बी)** स्त्री० विम्बमस्त्यस्याः। सूर्य्यादिमण्डले।

**वियन्मणि** स्त्री० वियतो मणिरिव प्रकाशकत्वात्। सूर्य्ये।

**विरेफ** पु० सूर्य्यकिरणे।

**विरोचन** पु० सूर्य्ये। चन्द्रे। वह्नौ।

**विलोम** त्रि० व्यस्तत्रैराशिकफलज्ञापके क्रियाभेदे। ''व्यस्तविधिर्विलोमे।'' (लीला०)

**विलोमकर्म्मन्** कर्म० विपरीतकर्मणि। ''छेदं गुणं गुणं छेदं वर्गं मूलं पदं कृतिम्। ऋणं स्वं स्वमृणं कुर्य्यात् दृश्ये राशिप्रसिद्धये।।'' लीलावत्युक्ते व्यक्तराशेर्मान-ज्ञानार्थे क्रियाभेदे।

**विवस्वत्** पु० सूर्य्ये।

**विषुव** न० विषु दिनरात्र्योः साम्यम्। समरात्रिदिनकाले। कालभेदः। अयनांशक्रमेण रवेः तुलामेषसंक्रान्तिभेदे च। ''मृगकर्कट संक्रान्ती द्वे तूदगदक्षिणायने। विषुवती तुलामेषे गोलमध्ये तथापरा'' ''भचक्रनाभौ विषुवद्द्वितयं समसूत्रगम्। अयनद्वितयं चैव चतस्रः प्रथितास्तु ताः।''(सू सि०) ''भचक्रनाभौ भगोलस्य ध्रुवद्वयाभ्यां तुल्यान्तरेण मध्यभागे विषुवद्द्वितयं समसूत्रगं परस्परं व्याससूत्रान्तरितं ध्रुवमध्ये विषुवद्वृत्तस्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ लग्नौ तौ क्रमेण पूर्वापरौ विषुवत्संज्ञौ मेषतुल्याख्यौ चेत्यर्थः।''

**विष्णुपदी** स्त्री० वृषसिंहवृश्चिककुम्भराशौ रवेः संक्रान्तौ। ''तदन्तरेषु संक्रान्तिद्वितयं द्वितयं पुनः। नैरन्तर्यात् तु संक्रान्तेर्ज्ञेयं विष्णुपदीद्वयम्।।''(सू सि०) तदन्तरेषु विषु-वायनान्तरालेषु संक्रान्ति द्वितयं द्वितयं पुनाराश्यादिभागे ग्रहाणामाक्रमणं वारद्वयं भवति। तदन्तराले राश्यादिभागौ द्वौ भवतः इत्यर्थः। तथा हि मेषाख्यविषुव-कर्काख्यायनयोरन्तराले वृषमिथुनयोरादी। कर्कतुल्ययोरन्तराले सिंहकन्ययोरादी।

तुलामकरयोरन्तराले वृश्चिकधनुषोरादी। मकरमेषयोरन्तराले कुम्भमीनयोरादी इति। एवं विषुवानन्तरं संक्रमणद्वयमनन्तरमयनं, तदनन्तरं संक्रान्तिद्वयं, तदनन्तरं विषुवमनन्तरं संक्रान्तिद्वयमनन्तरमयनादि पौनःपुन्येन ज्ञेयमित्यर्थः।

**विहग** पु० स्त्री० सूर्य्ये। चन्द्रे। सूर्यादिग्रहे।

**वृत्त** न० वर्त्तुले। गोलाकारक्षेत्रभेदे।

**बृहस्पति** पु० बृहत्याः वाचः पतिः। ग्रहभेदे। गुरौ।

**वेध** पु० वेधने। ''परिधनवमभागः शूकधान्येषु वेधः।''

**वेधस्** पु० सूर्य्ये।

**वैधृति** पु० विगता धृतिर्यस्मात्। विष्कम्भादिषु मध्ये। सूर्यचन्द्रयोः क्रान्तिसाम्येनानीते अशुभसूचके। ''एकायनगतौ स्यातां सूर्य्याचन्द्रमसौ यदा । तद्युतं मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः।।''(सू सि०)

**व्यतीपात** पु० तिथ्यादि योगभेदे। क्रान्तिसाध्यात्मके योगवियोगरूपे। ''व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा। एतद् भसन्धित्रितयं सर्वकर्मसु वर्जयेत्।''(सू सि०) ''श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके। यद्यमारविवारेण व्यतीपातः स उच्यते।।''

**व्यवकलन** न० विगमने। हीनतासम्पादने। ''व्यवकलनमार्गेऽसि कुशला।'' (लीला०)

**व्योममण्डल** न० व्योम मण्डलमिव। आकाशे।

**शङ्कु** पु० छायापरिमाणार्थे काष्ठादिनिर्मिते। ''अर्काङ्गुला तु सूच्यग्रा काष्ठी ह्यङ्गुलमूलिका। शङ्कुसंज्ञा भवेच्चैव तच्छायां परिकल्पयेत्।।''(सि शि०) दिक्साधनार्थं सूर्यसिद्धान्ते शङ्कुश्च दर्शिता यथा – ''शिलातलेऽम्बुसंशुद्धे वज्रलेपेऽपि वा समे। तत्र शङ्क्वङ्गुलैरिष्टैः समं मण्डलमादिशेत्। तन्मध्ये स्थापयेत् शङ्कुं कल्पनाद्द्वादशाङ्गुलम्। तच्छायाग्रं स्पृशेद्यत्र वृत्ते पूर्वापरार्द्धयोः। तत्र बिन्दू विधायोभौ वृत्ते पूर्वापराभिधौ। तन्मध्ये तिमिना रेखा कर्त्तव्या दक्षिणोत्तरा। याम्योत्तरदिशोर्मध्या तिमिना पूर्वपश्चिमा। दिङ्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि।।''(सू सि०)



**शनि** पु० सूर्यपुत्रे। च्छायगर्भजाते ग्रहभेदे।

**शशधर** पु० शशं मृगभेदं धरति इति। चन्द्रे।

**शीतगुः** पु० शीताः गावः किरणाः यस्य सः। चन्द्रे।

**शीतभानु** पु० शीतलाभानयोऽस्य। चन्द्रे।

**शीतमयूख** पु० शीताः मयूखाः यस्य। चन्द्रे।

**शीतरश्मि** पु० शीतारश्मयोऽस्य। चन्द्रे।

**शुध** सक० शौचे शोधने। शुद्ध्यति। ''भक्तोहरः शुद्ध्यति यद्गुणः स्यादिति।'' (लीला०)

**शुभ्रकर** पु० शुभ्रः करोऽस्य। चन्द्रे।

**शूर** पु० वीरे। सूर्य्ये।

**श्रावण** पु० श्रवणेन युक्ता पौर्णमासी सा अस्मिन् मासे। वैशाखादिषु चतुर्थे श्रावणीयुक्ते चान्द्रे मासे।

**श्रावणिक** पु० श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्त्यस्मिन् मासे। चान्द्रश्रावणमासे।

**श्रुति** पु० त्रिभुजक्षेत्रादौ भुजकोट्योः संयुज्यमाने रेखाभेदे।

**श्रेढी** स्त्री० गणनाभेदे।

**श्रेढीव्यवहार** पु० श्रेढीगणनार्थे लीलावत्युक्ते उपायभेदे।

**श्वेतधामन्** पु० श्वेतं धाम यस्य। चन्द्रे।

**श्वेतरोचिस्** पु० चन्द्रे।

**श्वेतवाजिन्** पु० श्वेतो वाजी यस्य। चन्द्रे।

**श्वेतवाहे** पु० श्वेतेन अश्वेन उह्यते। चन्द्रे।

**श्वेतवाहन** पु० श्वेतं वाहनं यस्य सः। चन्द्रे।

**षोडशांशु** पु० षोडश अंशवो यस्य। शुक्रग्रहे।

**संवत्सर** पु० संवत्सरन्ति ऋतवोऽत्र।

**सङ्कलन** न० एकत्र स्वीकरणे। योजने। संग्रहे। योजनं च नानासङ्ख्यासूचकाङ्कानामे-कसङ्ख्यापादकाङ्ककरणम्। तच्च द्विविधम् - शुद्धसङ्कलनम्, भिन्नसङ्कलनञ्च। ''कार्यः क्रमादुत्क्रमतोऽथ वाङ्कयोगो यथास्थानमथान्तरं वा।''(लीला०)

**सङ्कलित** त्रि० योजिते। रेखादिना संवृते।

**सङ्कलितैक्य** न० एकाद्यङ्कानां योगे। ''सैकपदघ्नपदार्थमथैकाद्यङ्कयुतिः किल सङ्कलि-तैक्यम्।''(लीला०)

**संक्रान्ति** स्त्री० संक्रमणम्।

**सङ्ख्य** न० सङ्ख्यायते।

**सन्ध्या** स्त्री० दिवारात्रस्य मध्यवर्त्तिकाले। युगसन्धिकाले।

**सन्ध्यांश** पु० सन्ध्या तत्प्रमाणः सत्ययुगादेरंशः। ''सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्।''(सू सि०)

**सप्तम** त्रि० सप्तानां पूरणः। येन सप्तसङ्ख्या पूर्य्यते तस्मिन्नर्थे। सा चन्द्रस्य सप्तमकलाया ह्रासवृद्धिरूपायां तिथौ च।

**सप्तर्षिमण्डल** त्रि० आकाशे नित्यं ध्रुवनक्षत्रपरिभ्रामके नक्षत्रसप्तकात्मके नक्षत्रमण्डलभेदे।

**सप्तसप्ति** पु० सप्त सप्तयोऽश्वा यस्य। सूर्य्ये।

**सप्ताश्व** पु० सप्त अश्वा यस्य। सूर्य्ये।

**सम** त्रि० समाने। तुल्ये। युग्मे। ''समेऽर्द्धिते वर्गः।''

**समयाध्युषित** न० समयः अध्युष्मितो यत्र। सूर्य्यताराराहितकाले।

**सवितृ** पु० सूर्य्ये।

**सहस्रकर** पु० सहस्रं करं किरणाः अस्य। सूर्य्ये।

**सहस्रपाद** पु० सहस्रं पादाः किरणाः अस्य। सूर्य्ये।

**सहस्रामशुः** पु० सहस्रमंशवो यस्य। सूर्य्ये।

**सहुरि** पु० सूर्य्ये।

**सावन** न० ''अहोरात्रेणैकेन सावनो दिवसः स्मृतः।'' अहोरात्रात्मके दिवसे। मासभेदे। सूर्यसिद्धान्तोक्तेषु नवविधकालमानेषु अन्यतमम्। ''ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं च गौरवम्। सौरञ्च सावनं चान्द्रमार्क्षमानानि वै नव।''(सू सि०)

**सावित्र** पु० सविता देवताऽस्य।

**सिद्धान्त** पु० ज्योतिषस्य त्रिषु स्कन्धेषु अन्यतमः। ''त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमाच्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः। भूधिष्ण्यग्रहसंस्थितेच्च कथनं यन्त्रादि यत्रोच्यते। सिद्धान्त स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः।''(सि शि०)

**सोर** पु० सूर्य्ये।

**सुतपस्** पु० सूर्य्ये। सुष्ठु तपोऽस्य।

**सुधांशु** पु० सुधेवाह्लादकाः अंशवोऽस्य। चन्द्रे।

**सुधाङ्ग** पु० सुधेवाप्यायनमङ्गमस्य। चन्द्रे।

**सुधाधार** पु० चन्द्रे।

**सुधानिधि** पु० सुधा निधायतेऽत्र। चन्द्रे।

**सुधाभृ(सू)ति** पु० सुधा भ्रियते पुष्यते सूयते वाऽनेन। चन्द्रे।

**सुधावर्षिन्** पु० सुधां वर्षति इति। चन्द्रे।

**सुधावास** पु० चन्द्रे। सुधावा इव वासो गन्धो यस्य।

**सुम** न० सुष्ठु मीयतेऽदः। चन्द्रे।

**सुरेज्य** पु० इज्यते पूज्यते। बृहस्पतौ। गुरौ।

**सुरोत्तम** पु० सुरेषूत्तमः । सूर्य्ये।

**सुवन** पु० सूर्य्ये।

**सुवर्णगणित** न० सुवर्णस्य वर्णादिज्ञानार्थे गणितभेदे। ली०ला०।

**सूचीक्षेत्र** न० सूच्याकारं क्षेत्रम्। लीलावतीप्रसिद्धे सूच्याकारके क्षेत्रभेदे।

**सूर** पु० सवति प्रेरयति कर्मणि लोकानुदयेन। सूर्य्ये।

**सूरि** पु० सूर्य्ये।

**सूर्य्य** पु० दिवाकरे।

**सूर्य्यकाल** पु० सूर्य्योपलक्षितः कालः। दिवसे।

**सूर्य्यग्रहण** न० सूर्यस्य राहुणा तदाक्रान्त भूच्छायया ग्रहणमाक्रमणम्। (श्लोकः सचित्रं।)

**सूर्य्योढ** पु० सूर्य्यः ऊढोऽस्तगतो यत्र। सूर्यास्तमयकाले।

**सेर** पु० मानभेदे। ''पादोनगद्याणकतुल्यटङ्कैर्द्विसप्ततुल्यैः कथितोऽत्र सेरः। मणा-भिधानं खयुगैश्च सेरेर्धान्यादितौल्येषु तुरुष्कसंज्ञा। द्व्यङ्केन्दु संङ्ख्यैर्घटकैश्च सेरस्तैः पञ्चभिः स्याद्घटिका च ताभिः। मणोऽष्टभिस्त्वालमगीरशाहकृतात्र संज्ञा निजराजधान्यम्।।'' (लीला०)

**सोम** पु० चन्द्रे।

**सौरि** पु० सूर्यस्यपत्यम्। शनैश्चरे।

**स्पर्शन** न० ग्रहणे।

**स्फुट** त्रि० विकसिते। मेषादिराशिषु अंशविशेषस्थितेषु सूर्य्यादिग्रहेषु। ग्रहाणां स्फुटताकरणप्रयोजनं सिद्धान्तशिरोमणौ उक्तं यथा – ''यात्राविवाहोत्सवजात-कादौ खेटैः स्फुटैरेव फलस्फुटत्वं। स्यात् प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद् वा।''(सि शि०)

**स्यून** पु० सूर्य्ये। किरणे।

**स्योन** पु० सूर्य्ये। किरणे।

**हर** पु० विभाजके। ''अन्योन्यहाराभिहतौ हरांशाविति।''(लीला०)

**हस्त** पु० चतुर्विंशत्यङ्गुलपरिमाणे। ''यवोदरैरङ्गुलमष्टसङ्ख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्च-तुर्भिः।''(लीला०) अश्विन्यादिषु त्रयोदशे नक्षत्रे (स्त्री०)।

**हार** पु० भाजके। ''अन्योन्यहाराभिहतौ हरांशौ।''(लीला०)

**हिमांशु** पु० हिमा अंशवोऽस्य। चन्द्रे।

**हेलि** पु० सूर्य्ये।

# अनुशीलितग्रन्थसूची


१) **अमरकोशः** – वाचस्पति परमेश्वरन् मूसत् , केरल साहित्य अकादमि, केरलम्,२००८

२) **वाचस्पत्यम्** – श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यः, चौखम्बा संस्कृत ग्रन्थमाला ९४, वाराणसी, २०१६

३) **शब्दकल्पद्रुमः** – स्याराजाराधाकान्तदेवबाहादुरः, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, २०१५

४) **शब्दरत्नाकरः** – बहुजनवल्लि सीतारामाचार्यः, नवरत्न बुक् हौस्, विजयवाडा, २०१६

५) **ज्योतिषनिघण्टुः** – ओणक्कूर् शङ्करगणकः, करन्ट् बुक्स्, केरलम्, २०१२.

६) **एन्सैक्लोपीडिया आफ् इण्डियन् आस्ट्रालजी** – आचार्य एन् इ मुत्तुस्वामी, एम् पि एस् ट्रस्ट्, तिरुवनन्तपुरम्, २००६.

७) **सूर्यसिद्धान्तः** – श्रीसूर्यमयासुरसंवादरूपः आर्षः, चौखम्भा संस्कृत भवनम्, वाराणसी, २००६

८) **पञ्चसिद्धान्तिका** – वराहमिहिरः, पि पि एस् फौण्डेषन् अडयार्, मद्रास्, १९९३

९) **ज्योतिषसिद्धान्तसङ्ग्रहः** – पितामहसिद्धान्तः, वृद्धवसिष्ठसिद्धान्तश्च, महामहोपाध्याय विघ्नेश्वरीप्रसादद्विवेदी, ब्रज् भूषण् दास् अण्ड् को, १९१७

१०) **सिद्धान्तशिरोमणिः** – श्रीभास्कराचार्यः, चौखम्भा संस्कृत संस्थान, २००५.

११) **लीलावती** – श्रीभास्कराचार्यः, चौखम्बा विद्याभवन् , वाराणसी, २००१

१२) **ज्योतिषशास्त्रस्येतिहासः** – आचार्यलोकमणिदाहालः, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २००९.

१३) **मनुस्मृतिः**– प्रो.एन्.गोपिनाथन् नायर्, विद्यारम्भ पब्लिकेशन्स, अलपुजा,केरलम्, २००१

१४) **अग्निपुराणम्** – सं. आचार्य श्रीबलदेवोपाध्यायः, चौखम्भा संस्कृत संस्थान्, वाराणसी, १९९८.

१५) **भारतीयज्योतिश्शास्त्र इतिहासः** – आचार्य लोकमणिदाहलः, चौखम्बा संस्कृत संस्थान, वाराणसी, १९९०.

